।। श्रीदिग्विजयरामो विजयते ।।

श्रीमदुत्तरादिमठाधीशश्रीसत्यात्मतीर्थविरचितः

कर्मनिर्णयटीकाभावप्रकाशिकापराभिधः

# कर्मविजयः

खण्डार्थचन्द्रिकाविमर्शात्मकः






जगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थानम्

श्रीमदुत्तरादिमठः

॥ श्रीदिग्विजयरामो विजयते ॥

श्रीमदुत्तरादिमठाधीशश्रीसत्यात्मतीर्थविरचितः
कर्मनिर्णयटीकाभावप्रकाशिकापराभिधः

# कर्मविजयः

## खण्डार्थचन्द्रिकाविमर्शात्मकः

...प्रकाशनम्...
जगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थानम् श्रीमदुत्तरादिमठः
विश्वमध्वमहापरिषत्
बसवनगुडि बेंगळूरु – ४
२०२१

**KARMA VIJAYA,**
A.k.a "Karma Niranaya Teeka Bhava Prakashika", a gloss on Karma Nirnaya Teeka of Sri Jayateertha, being a critique of Khandartha Chandrika of Sri Bannanje Govindacharya

| | |
|---|---|
| Written by | **His Holiness Sri 1008 Sri Satyatma Tirtha Swamiji** of Sri Uttaradi Math |
| Published by | **Vishva Madhwa Maha Parishat** Research Center, Phone : 080 26603692 |

| Edition | Year | Copies | Total |
|---|---|---|---|
| First | 2021 | 1000 | 1000 |

| | |
|---|---|
| No.of Pages | XX+104=124 |
| © | Reserved |
| Price | **100** |
| Fonts used | Adishila (www.adishila.com) |
| Type Setting | V.M.M.P Research wing |
| Cover Design by | Sheshagiri KM |

**Copies can be had from**

**Vishva Madhwa Maha Parishat**
Research Center, #11, 1st Floor,
Uttaradi Math Building. Uttaradi Math Road,
Shankarpuram, Basavanagudi
BANGALORE - 4 Phone : 080 26603692

Printed by : **VAGARTHA,**
Hanumantha Nagar Bangalore 19. Ph.22427677.



यः [१]कर्मविजयं शास्त्रैः प्रातिष्ठिपदहर्निशम् ।
अर्पये कर्मविजयं तस्मै मद्गुरवे मुदा ॥

---

१ "कर्मणो बीजरूपश्च सन्ततं तत्फलप्रदः ।
कर्मरूपश्च भगवान् श्रीकृष्णः प्रकृतेः परः ॥" ब्र.वै.प्र.ख.25-2
इति वचनात् कर्म=विष्णुः, तस्य विजयः सर्वोत्कर्षः, तमित्यर्थः ।

# ग्रन्थानुक्रमणिका

॥ श्रीः ॥

॥ श्रीदिग्विजयमूलरामवेदव्यासा विजयन्ते ॥

# व्याहृतिः

अथ महानाम्नी ।

छन्दःप्रार्थनासिन्धुशयनस्य । खण्डखाद्यमैतरेयखण्डस्य । अतुलोपसर्गस्स्वर्गतलस्य । सुधासवस्सुरधीराणाम् । स्वर्गभूमिरपवर्गरसिकानाम् । तत्त्वनिष्यन्दोऽमत्तमुनीनाम् । भावबन्धुरं स्वभावसुन्दरं च पदमन्दिरम् ।

**सेयं वेदसुधासिन्धौ नूनं बिन्दवति स्तुतिः ।**
**गर्तावर्तविवर्तार्थैर्नूनं सिन्धवति श्रुतिः ॥**

निर्वेदाः पुनरकृतश्रुतिसम्पत्तिमहार्थहीना दुर्ददरिद्रुः । सवेदा अपि मीमांसकदुर्दुरूटाः पुनरनुन्निद्रा इव कर्मकर्मेति श्रुतिभावं व्यतिब्रुवाणाः काणबाणा बभूवुः । व्यतिजघ्नुश्चाम्नायानामैदम्पर्यं यागो याग इत्याहिण्डमानाः पण्डाऽपूर्वभावनाः । तदेषां कर्मकरटानामिदं विवर्ताधिष्ठानं पाटयन्निवाचार्यो भगवत्पादश्श्रीमदानन्दतीर्थः प्रकरण-रणताण्डवमिदङ्कर्मनिर्णयाख्यन्तनुष्व तनुष्वेति तरसा व्यातेने ।

( नभसि कर्णन्दत्वा )

किमङ्ग ?,....... किमात्थ ?!!!!

अधुनादः कुत इति.................. ? ? शृणु ।

वयं हि विकारिणि परुदेवोत्तरापथेनाकारिता आर्यावर्ते नर्मदामुपर्युपर्युपगङ्गञ्च सञ्चरन्तः प्रचिचारयिषितं विष्णुसर्वोत्तमत्वं यथाशक्ति निर्वर्त्य निवर्तितुकामाः कलिङ्गान्समगच्छाम । श्रीमदाचार्यान्तेवासिनामस्मत्स्वान्तनिवासिनां श्रीमन्नरहरितीर्थपूज्यपादानामभिजनमाप्य भृशं समतुष्याम । एवमितस्ततः परितः पुरीतटमेवास्मासु यथाप्राचीनाचारञ्चरत्सु चीनमारीप्रकोपस्सहसा समजनि ।

अविहा !!! ततः.......?

ततोऽवनीजनिरमणमेव शरणीकुर्वाणा गोदावरीतटचरीं सुवर्णपुरीमुपसर्गतःकर्तुं सवितुर्देवस्य भर्गमन्तेवासिवर्गैस्सह ध्यायन्तोऽध्यवसाम ।

एवमनेहसि याते भूयसि दक्षिणेन षण्मासान् दिनमणिर्दिवमाक्रम्य क्रमितुमुपचक्रमे । चङ्क्रमणश्रान्त्या विश्रान्तक्रान्तावादित्ये, तद्गोत्रावतंसपुंसो ज्याजनिजानेरार्यवर्योदीर्यचर्यस्य श्रीमूलरामस्य भगवतोऽपर्यायसपर्यायामसुधारणकारणसुधाध्यापनसहितसुहितायामधिघोष-झोषझुष्यमाणायामागतो नः कर्णपथमयं वृत्तान्तः ॥

अथ कोऽसौ...... ?

बत........सोऽसौ !!

यत्..."नूनन्निष्कोशीकृताशेषमूलकोशभावविशेषायां, निश्चोतच्चूतरसकुल्यातुल्यायां, स्वर्गमितसुधायां, वसुधायां सुधायां, स्फुटत्स्फुटोक्तियुक्तिस्फुलिङ्गरङ्गायां, मूकीकृतघनघोष-गङ्गायाम्, अन्धुसिन्धूपहासिगम्भीरान्तरङ्गायां, कृतकुमतरुतभङ्गायां, सुरभिताचार्यवचो-वाटिकायाण्टीकायामपरितोषात्साम्प्रतङ्कर्मनिर्णयटीकाभावमवकर्णयता प्रथितयशसा विदुषा बन्नञ्जे गोविन्दाचार्येण खण्डार्थनिर्णयापराभिधकर्मनिर्णयस्य खण्डार्थचन्द्रिकानाम्नी व्याख्यायिका काचित्स्वैराचारं विरचिता" इति ॥

ततः.....?

ततः....पाणिङ्गते च तस्मिन् कर्णेचुरचुरायमाणे ग्रन्थवृत्तान्ते, शुद्धविद्याव्यसनविदूरेऽपि करालेऽस्मिन् कलौ काले क्वचिद् वेदविद्यागन्धोऽद्यापि प्रश्वसितीति, धारयत्यसून् कथञ्चि-त्सौपर्वाणीवाणीसौरभः कुसुमकरीरेषु सुतरामिति चाकालिकशम्पाकम्प इव सद्योभिद्यमान-मोदबुद्बुदो मनागस्मन्मनोमन्दिरेऽङ्कुरितः ।

परम्........... ।

परम्....!!!!??

परम्..., **श्रीमत्पूर्णप्रमतिगुरुकारुण्यसरणिं प्रपन्नान्** प्रगुणप्रतनान् परमर्षितुल्यान् श्रीमज्जयतीर्थार्यवर्यानबोधोपहतचेतसो बोधलवदर्पखर्परिता वचसा दुस्तर्पयन्तीति

व्यथितक्कथितं नो मनः । **"शुद्धं प्रमाणं स मे"** इत्यनुयातमध्वगुरुपद्धतीनपि सर्वज्ञकल्पान् गुरून् विद्यार्जितदुर्विलासैर्मुधैवावधीरयन्तोऽहमहमिकया वर्त्मभ्रान्त्या गर्तम्पततोऽमूञ्जनान् सदयम्पश्यतामदूयत नश्चेतः ।

अतस्तदेषान्नु प्रतनवचोवधूटीधाटीशाटीकोटिमेवावलम्ब्याकलितचलितानां, "तत्पथमेवानुपतन्तो विमृशाम तान्प्रतनान्" इत्यसत्पथेऽन्तरिताञ्जनान्निनीषूणां, प्रथितमहात्मसु कृतविकृतगहनक्षेपकुहनानां व्यञ्जनारञ्जितभावकरम्बितविडम्बितोक्त्या च निह्नवमाचरतामिमां विषमितविमर्शपर्शुकामङ्गपर्येषणया सङ्गमयितुमयम् आरम्भसंरम्भोऽधुना सङ्गत एवाङ्ग ॥।॥

(स्वगतम्) एवं न्वहो !!.........इदम् । ..........तर्हि युक्तोयमारम्भः ।

( प्रकाशम् ) बाढम् !!!

ननु भणितचरङ्कर्मनिर्णयमाचार्यो व्यातेन इति । ततस्ततः........ ?

ततः.... सत्स्वपि समर्थेष्वर्थिशिष्येषु **"व्याख्यास्यत्येष.........."** इति स्वफक्किकाशयविशदने स्वयं भगवत्पादैरेव घनान्तःकरणकरुणया सकलसमक्षं **पुरैव नियुक्ताष्टीकालोके** सुगृहीतनामधेया विरक्तमूर्धन्या धन्यसंन्यासिनो यतिकुलमणयस्तत्रभवन्तश्श्रीमज्जयतीर्थपूज्यचरणा भगवत्पादकृतकर्मनिर्णयस्य मर्मप्रकाशिनीं, धर्मपरायणानां चित्ततोदापनोदिनीं, विनोदिनीं धवलधवलामेकां मल्लिकावल्लीनिभां टीकामतल्लिकामसोषत ।

तामेनां सुगन्धिमल्लिकामप्युष्णोष्णिकया सिञ्चन्तस्सूनाप्रसूनमिव, कण्टकरुचिक्रमेलका मधुमोचामिव केचित्ते नाभिनन्दन्ति । सुस्वरितवीणामिव मधुरमधुरं मञ्जुलञ्च निनदतीमुपश्रुत्युपलाल्यामप्यपश्रुतिभिरपघ्नन्ति ।

अथापि रोचयामो वयं मनसाऽमीषामुपदशमि दशायामपि व्याख्याव्यवसायव्यसनिनां पदविन्यासप्रौढिमानं मञ्जुभाषामधुरिमाणञ्च ।

परं...., न तन्मात्रं पर्याप्तङ्गम्भीरापारशास्त्राकूपारपारतरणे तत्पङ्क्तिपर्यालोचने च ।

तत्र हि- निस्सीमाध्ययनसचिवगम्भीरालोचनं, मौलगूढार्थस्य ग्रहणं, युक्त्या विवेचनं,

चिरन्धारणञ्चेति प्रधानम्बीजम् । यच्चाधुना नरमात्रजनानान्दुर्लभमिति तु न तिरोहितमात्मावमर्शवताम्पुंसाम् । तदिदं परं सर्वं, व्याख्यानैपुण्यपुण्यबीजं वैराग्यभाग्येषु तपोतिशयमहिमवत्सु टीकाकृत्सु समूढमिव दृढन्निरूढमूलम् ।

अनितरसाधारणी हि "**धारणमातृका**" टीकाकृताम् ।

अन्यूनानतिरिक्तभाषित्वं, युक्तिसहविचारशालित्वं, यथासिद्धान्तं विषयोपपादकत्वं, चितोचितपदपुञ्जैस्सन्दर्भनिरूपकत्वञ्चेति निखिलापेक्षितनवनवोन्मेषप्रतिभावैभवं टीकाकृतोऽन्यत्र प्रायो विरळं, न क्वापि सुलभं, किं बहुना नास्त्येवाप्रतनजनेषु । स्थाने खलु '**बहु व्याहरताऽनेन न किञ्चिदपशब्दितम्**' इति मनोरमरामवचनमेतेष्वपि ।

{ अस्तु तत्तथा }

अथ कास्ता अपश्रुतयः ?

इमास्ताः पुनरपश्रुतयः ।

**इयमाद्या**

" नाह नामग्राहं कर्मनिर्णय इति प्रबन्धाऽधिकारी, यदयञ्जयतीर्थमुनिस्स्वनासान्यासेन तन्नाम व्यतिचक्र इति " ।

**अथ द्वितीया**

" नालाभिषत[१] मूलकोशा इति " ।

**तृतीया पुनः**

" परमगुरोरवगोरणमिति च " ।

ता एता अपश्रुतयस्तदस्मिन् भावप्रकाशिकापरनामककर्मविजयस्य **प्रथमनिनादे** पर्याप्तप्रमाणवीणोपवीणनेन सौस्वर्यपथमानीताः ।

---

१ नावालम्बिषतेत्यपि ।

**तत्रादौ तृतीया । सा पुनरतिहेया ।**

तथाहि- प्राचीनटीकाकारेषु परमादरष्टीकाकाराणाम् । तत्र हि मङ्गलपद्ये गुरूणामिति बहुवचनमेवाक्षिप्रतिफलितं साक्षिभूतम् । तस्य हि श्रीनिवासतीर्थीय एवं व्याख्यानमुपलभ्यते ।"**पद्मनाभतीर्थानारभ्याक्षोभ्यतीर्थपर्यन्तानाम्**" इति ॥

तेन स्फुटष्टीकाकृतां श्रीनरहरितीर्थेष्वादरः[१] ।

यदीयव्याख्यानोल्लेखबलात् "प्रतना अवगूर्णाष्टीकाकृता" इति कोकूयते, तेनैव प्रतनाः परमादरेण संस्मृता इति तु कथं विस्मर्यते ? ।

तदियं रीतिरेषां कस्य वा गुणरागिणो जनस्य मनसि "दोषो ह्यविद्यमानोपि तच्चित्तानां प्रकाशते" इति सूक्तेस्स्थानन्न कल्पयति ? ।

अवगोरणमवगोरणमित्यन्विष्यान्विष्य पश्यन्ति हृष्यन्ति च, स्फीतालोकमध्यमध्यासीनमिव लोचनगोचरमादरभावं पश्यन्तोऽपि न पश्यन्ति । अहो विस्मृतिचातुरी तुरीयवयसि ।

किञ्च-

**"तस्माद्वन्द्याश्च पूज्याश्च ब्रह्माद्या ज्ञानयोजकाः ।**
**गुरुत्वेन क्रमादेव विशेषेणैव केशवः ।**
**आरभ्य स्वगुरुं यावद्विष्णुरेवोत्तरोत्तराः"**

**टी-** यत एवमसदर्थकथने महाननर्थः तस्मात्प्रामादिकापराधपरिहाराय च "**प्राचीनव्याख्यातृवन्दनं कार्य**"मित्याह । **तस्मादिति** । इत्यृग्भाष्यस्य टीकामवलोकयतोऽमत्सरमनसः कस्य वा मनसि "**अवगूर्णाः प्रतनाष्टीकाकृता**" इति दुर्भावलवतुमुलतरङ्गोऽपि जनितुमलम् ???

एवन्नाम हि **स्वगुरुमारभ्य सर्वोऽपि ज्ञानजनको वन्दनीय** इत्यृग्भाष्यस्य भावङ्कलयतान्तत्रभवताण्टीकाकृतान्न स्वप्नेऽपि परमगुरोरवगोरणन्नाम सम्भवति[२] ।

---

१ अयमादर एव '**युक्त्युपेतमिति व्याख्यानमसत्**' इत्यत्र असत्=अविद्यमानमिति नो बोधयतीव ।
२ अत एवोत्तरत्रोभयत्रापि "**न बुध्यामहे**" "**न बुध्यामहे**" इति गौरववचनं स्वरसं सङ्गच्छते ।

नतरां **"न शब्दाब्धौ गाढा:..."** **"न वैदुष्यभ्रान्त्या..."** **"यन्मादृशोऽपि यतते..."** इति विनयशिखरमारूढानामन्यतोऽस्मिन्विषये शिक्षणीयमस्ति।
नहि शफरशिशु: केनापि तरणेन करणीय:।

**आद्यद्वयन्त्वतिबालिशम्**। न निरासायासमपेक्षते। तथापि **पाक्षिकोऽपि.....** इति न्यायेन "खलु कुशङ्किनां शङ्कामपि कृत्वा" इति शिष्यबुद्धिस्थैर्याय, टीकावलोकनसुगमोऽपि प्रमाणसम्प्लवोऽत्र क्रोडीकृत्यैकत्र तुन्दपरिमृजमन्दानुजिघृक्षया निरूपित:।

अथ च, यदेते प्रतनव्याख्याने टीकाकृदुद्भावितान् क्लेशान् खण्डार्थचन्द्रिकया वारितान्मत्वा टीका निरस्तानिरस्तेति क्ष्वेडन्तस्सम्भ्रम्य विजजृम्भिरे,
तदमीषां फल्गुप्रयास: फलेग्रहिर्नाभूत्।
**न लोमाप्यहीयत टीकाया:**। न हीयते। न हास्यते वा।
टीकादुर्गो ध्वस्त इति तु भगवान्भ्रम एवायमायुष्मतामित्यञ्जसाऽऽवेदितम्।

**अयि विबुधा अवधत्त !!!**

न केवलमदसीयप्रवचनव्याख्यया युक्त्याकरयुतष्टीकाकृदादृतः क्रमो दुर्निराकर:, अपि तु मूलभावोऽपि युक्ततया हृदयङ्गमतां नासादयति । तत्र तु.......टीकाम् अदसीयञ्चेत्युभयमपि सममेव परिशीलयतां विदुषां कषधिषणैव प्रमाणम् ।

**" वाचनिकार्थग्रन्थसन्दर्भ एव तत्र प्रथमं निदर्शनम् "**

इत्यशेषं विशेषशेषावेशवतष्टीकाकृतो वचनं प्रत्यक्षरं प्रतिपदं.......... अतिमङ्गलम्।

श्रीमत्सत्यात्मतीर्थाः
उत्तरादिमठः

इत्यनेकनारायणस्मृतय:

# समर्पणम्

श्रीमत्परमहंसपरिव्राजकाचार्यवर्यत्वाद्यनेकगुणगणालङ्कृत,श्रीमूलसीतासमेतश्रीमन्मूलराम-
दिग्विजयरामवेदव्यासदेवदिव्यपादपद्माराधकश्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनाचार्यश्रीमज्जगद्गुरु
श्रीमन्मध्वाचार्यमूलमहासंस्थानश्रीमदुत्तरादिमठाधीशानामस्मत्स्वरूपोद्धारकाणां
तत्त्वोपदेशकानां मन्त्रोपदेशदानां श्रीमूलसीतासमेतश्रीमूलरामदिग्विजयरामवेदव्यासादि-
पूजनसौभाग्यदानां श्रीमन्न्यायसुधामण्डनादिग्रन्थनिर्मातॄणां वादाहवसिंहनादानां
श्रीमत्सत्याभिज्ञतीर्थकरकमलसञ्जातानां **श्रीमत्सत्यप्रमोदतीर्थानां** चरणनलिनयोः

तथा तद्वारा

सर्वज्ञकल्पानां निरस्ताशेषकुमतानां मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणानामखण्डित-
वाक्यानामानन्दतीर्थोपदिष्टनारायणाह्वयनिधिप्रदर्शकानां कामितार्थप्रदानेकाकूतगर्भितवाचां
कामबाणच्छिदां मध्वशास्त्रविजयस्तम्भस्थापकानां श्रीमन्न्यायसुधा**कर्मनिर्णयटीका**द्येक-
विंशतिग्रन्थप्रभवानां श्रीमट्टीकाकृत्पादानां श्रीमदक्षोभ्यतीर्थकरकमलसञ्जातानां
**श्रीमज्जयतीर्थपूज्यचरणानां** चरणनलिनयोः

तथा तद्वारा

तदन्तर्यामिणां शुद्धप्रमाणानां स्वान्तध्वान्तनिकृन्तने जितमहावैकर्तनांशुव्रजानां निर्दोषाणां
तापत्रयोन्मूलने जितचन्द्रचन्द्रिकाणां गाम्भीर्ये जितसिन्धुराजानां
भवाटवीनिकृन्तनपटुवाणीकृपाणीचणानां धर्मविज्ञानवैराग्यपरमैश्वर्यशालिनामभ्रमाणां
श्रीशपादाम्बुजासक्तानां पापपाटनपण्डितपादपङ्कजरेणूनां बुद्धिशोधकानां सर्वकर्मकर्तॄणां
सर्वकर्मकारयितॄणां सर्वकर्मस्वामिनां सर्वकर्मसमर्पकाणां सर्वकर्मफलभोक्तॄणां
सर्वकर्मफलभोजयितॄणां सर्वकर्मप्रेरकाणां सर्वकर्मोद्बोधकानां सर्वकर्मशुद्धिप्रदानां
सर्वकर्मसिद्धिप्रदानां सर्वकर्मनिष्ठानां सर्वकर्मसाक्षिणां सर्वकर्मनिष्ठभगवद्रूपोपासकानाम्
अशेषनिःसङ्ख्यानादिकालीनधर्माधर्मद्रष्टॄणां स्वेच्छयोद्बोधकानां कर्मपाचककपिलोपासकानां
**श्रीमदानन्दतीर्थश्रीमच्चरणानां** चरणनलिनयोः

तथा तद्वारा

तदन्तर्यामिणां विधीशानशक्रपूर्वैः सदा मखैरिज्यमानानां सर्वयज्ञभुजां रमाप्रणयिनां ब्राह्मणोपनिषन्मन्त्रभेदभिन्नाखिलवेदगीष्प्रतिपाद्यानां परब्रह्मणां यज्ञानां यज्ञपतीनां यज्वनां यज्ञाङ्गानां यज्ञवाहनानां यज्ञभृतां यज्ञकृतां यज्ञिनां (यज्ञभुजां) यज्ञसाधनानां यज्ञान्तकृतां यज्ञगुह्यानां कर्मफलोज्झितानां सर्वकर्मफलप्रदानामुपास्यानां **श्रीमन्मूलसीतासमेत-श्रीमन्मूलरामदिग्विजयरामवेदव्यासवंशरामप्रसन्नविठ्ठलादीनाम**नन्तगुणपरिपूर्णयो-र्निर्दोषयोर्जगज्जन्मादिकारणयोश्चरणनलिनराजयोः **कर्मविजयकुसुम**मिदं सभक्तिश्रद्धं ससाष्टाङ्गानन्तनतितति समर्प्यते ।

**दिनाङ्कः**
8-10-2020

शार्वर्यां, दक्षिणायने, अधिकाश्विने,
कृष्णपक्षे, षष्ठ्यां, बृहस्पतिवासरे ।



**टीकाकृदाचार्यसुवर्णसेवासुवर्णभूषा सुवराङ्घ्रिपद्मे ।**
**समर्पिताऽस्यां हि सुवर्णपुर्यां तस्मादियं सार्थकनामधेया ॥**



## श्रेयः प्रार्थना

ग्रन्थप्रकाशनसेवां कृतवतः विशेषतोऽस्मद्गुरुचरणानुग्रहपात्राणि सुवर्णपुर्यभिजनान् **नालम् नरसिंहरायान्** अस्मदुपास्यः भगवान् श्रीमन्मूलसीतासमेतश्रीमन्मूलरामदिग्विजयरामवेदव्यासवंशरामप्रसन्न-विठ्ठलादिरूपी ज्ञानभक्तिवैराग्यादिदानेन आयुरारोग्यैश्वर्यप्रदानेन च समनुगृह्णात्विति सम्प्रार्थयामहे ।

# अनुग्रहस्मरणम्

शार्वरीभाद्रपदकृष्णद्वादश्यां रात्रौ खण्डार्थचन्द्रिकासहितखण्डार्थनिर्णय-पुस्तकं पण्डितसत्यध्यानाचार्याः [1]प्रादुः । तद्रात्रावेवावलोक्य विमर्शः कार्य इति निरधारि । परेद्युः श्रीमन्न्यायसुधापाठानन्तरं श्रीसत्यधर्मतीर्थकृतश्रीपादपादुका-स्तोत्रपाठप्रसङ्गे षट्त्रिंशत्तमः श्लोको यदृच्छया प्राप्तः । श्रीसत्यधर्मतीर्थकृत-व्याख्याने **"कर्मनिर्णयटीकायां लक्षणाया अपि भगवन्निष्ठत्वोक्तेः"** इति वाक्यं दर्शनपथमागतम् । तदैव तिरुकोयिलूरुतः गुरुचरणानां तथा रघूत्तमतीर्थानां मळखेडतः श्रीरघुनाथतीर्थानां श्रीमट्टीकाकृत्पादानां श्रीमदक्षोभ्यतीर्थानां मन्त्राक्षत-समेतशेषवस्त्रप्रसादः श्रीगुत्तलाचार्यवर्यैरानीय प्रदत्तः । अहो करुणा समेषां गुरूणाम् । रात्रौ कृतस्य कर्मनिर्णयटीकासाधुत्वसमर्थनसङ्कल्पस्य पूरणाय स्वयं प्रसादरूपेण ग्रन्थरूपेण चागत्य गुरुभिः परमानुग्रहः कृत इति परमानन्दः समजनि । तेभ्यो गुरुवर्येभ्योऽनन्तानि साष्टाङ्गानि नमांसि समर्पयामः ।

---

१ इदमत्र यद्वृत्तम् । प्राप्ता खण्डार्थचन्द्रिका । आनिशान्तमधिशीलिता । परिदृष्टा रुचिरभाषाभूषान्तरिता दोषाः । अथ शङ्काः समुत्पेतुः । बभासिरे युक्तिवलयाः । मिथो ग्रथिताः । सिद्धा साक्षरा विमर्शशृङ्खला । रचिता साक्षाद्दूरवाणी खं.चं.कर्तुः । रणितम्..........रणितम्......... रणितम् ....... रणि----///

तीरान्तरात् :- 'हला'रवः ।

उपक्रमतीरात् :- कुशलं कच्चित् ,, परिचयपूर्वः प्रश्नः ।

(परीत्य गलितः कालः)

उपक्रमतीरादेव :- अथ साक्षाद्विषय उपक्षिप्तः । टिटीकिरे कोटयः । निरीक्षितं समाधानम् । जिज्ञासितो भावः खं.चं.कर्तुः .... । ( क्षीणो ध्वनिः ) अन्तरा नीरवः ..... । श्रुतं सहसा तीरान्तरात् ।

**"न किञ्चित्स्मर्यतेऽधुना"** इति । हतो न... उत्साहः ।

पुनरनामयं पृष्ट्वा अभिकाम्य च विरता वयम् ।

# श्रेयःप्रार्थना

✦ ग्रन्थमेनं परिशील्य स्वाभिप्रायमाविष्कर्तॄन् ग्रन्थरचने प्रोत्साहकान् जयतीर्थ-विद्यापीठकुलपतीन् पण्डितवर्यान् गुत्तलोपाह्वान् आचार्यवर्यान् (रङ्गाचार्यान्) तथा

✦ एतद्ग्रन्थविषये स्वाभिप्रायं कथयितॄन् ग्रन्थरचने प्रोत्साहकान् पूर्वाश्रमे मध्वशास्त्रादिकमुपदिष्टवतः पण्डिततल्लजान् सत्यध्यानविद्यापीठकुलपतीन् महाव्याघ्रोपाह्वान् श्रीविद्यासिंहाचार्यान् संस्मरन्तः, तान् भगवान् श्रीमन्मूल-सीतासमेतश्रीमन्मूलरामदिग्विजयरामवेदव्यासवंशरामप्रसन्नविठ्ठलादिरूपी ज्ञानभक्तिवैराग्यादिदानेन निरन्तरपाठ-प्रवचन-ग्रन्थरचनादिसौभाग्यदानेन च समनुगृह्णात्विति सम्प्रार्थयामहे ।

✦ ग्रन्थमानीय प्रदत्तवतः पण्डितान् जयतीर्थविद्यापीठस्य प्रांशुपालान् सत्यध्यानाचार्यान्

✦ एतद्ग्रन्थस्य मुद्रणदोषादिपरिशोधकान् पण्डितानस्मच्छिष्यान्

✦ पत्रविन्यासकर्मणि कृतपरिश्रमं पण्डितं महिदासाचार्यं

✦ अक्षरयोजनपत्रविन्यासादिकर्मसु दिवारात्रं कृतभूरिपरिश्रमं पण्डितं महिषी कृष्णाचार्यं च भगवान् श्रीमन्मूलसीतासमेतश्रीमन्मूलरामदिग्विजयराम-वेदव्यासवंशरामप्रसन्नविठ्ठलादिरूपी ज्ञानभक्तिवैराग्यादिदानेन पाठप्रवचना-दिसौभाग्यदानेन च समनुगृह्णात्विति सम्प्रार्थयामहे ।

# विषयानुक्रमणिका

॥ इति युक्त्युपेतविमर्शः ॥

## अथ बुद्धिपूर्वविमर्शः

॥ इति बुद्धिपूर्वविमर्शः ॥

## अथ मुख्यवृत्तिविमर्शः

॥ इति मुख्यवृत्तिविमर्शः ॥

## अनुबन्धः



## परिशिष्टम्

॥ श्रीदिग्विजयरामो विजयते ॥

# कर्मनिर्णयः

य इज्यते विधीशानशक्रपूर्वैस्सदा मखैः ।
रमाप्रणयिने तस्मै सर्वयज्ञभुजे नमः ॥

# कर्मनिर्णयटीका

ब्राह्मणोपनिषन्मन्त्रभेदा वेदगिरोऽखिलाः ।
यत्क्रीडाभूमयस्तस्मै परस्मै ब्रह्मणे नमः ॥

प्रणम्य श्रीमदानन्दतीर्थार्यपदपङ्कजे ।
गुरूणां च यथाबोधं व्याकुर्वे कर्मनिर्णयम् ॥

# कर्मविजयः

मूलदिग्विजयौ रामौ व्यासं नत्वा तथा गुरून् ।
कर्मनिर्णयटीकायास्साधुत्वं स्थाप्यते मया ॥

सर्वकर्मपरकर्तृभावतस्सर्वकर्मफलदातृभावतः ।
सर्वकर्मफलभोक्तृभावतः कर्मनामहरये नमो नमः ॥

कर्मणां सर्वजीवानामुत्तमः कर्मकर्मकः[1] ।
कर्मणां सिद्धिदः कर्मनामा मध्वोऽवताद्धि माम् ॥

कर्मत्यागे[2]ऽपि कर्मेशप्रीत्यर्थं कर्मयोगिनः[3] ।
पद्मनाभनृहर्यर्यमाधवाक्षोभ्यसूरिणः ॥

---

१ कर्माणि = वेदाद्युक्तानि सर्वाणि कर्माणि, कर्माणि = कार्याणि यस्य सः कर्मकर्मकः । कर्म कर्मनामको भगवान्, कर्म कर्ता, माता = लयकर्ता, ज्ञाता, अन्तर्णीतणिच् ज्ञापयिता वा यस्य सः कर्मकर्मकः ।

२ कर्मत्यागे = ज्योतिष्टोमादिकर्मत्यागे ।

३ कर्मयोगिनः = जपव्याख्यानहरिपूजादिरूपनिष्कामकर्मयोगिनः ।

कर्मनिर्णयटीकातः पद्यमालादितोऽपि च ।
कर्मनिर्णयकर्तारं जयार्यं च नमाम्यहम् ॥

कर्मन्दिवर्यान् विद्याधिराजादिगुरुपुङ्गवान् ।
कर्मनिर्णयटीकाया भावबोधार्थमाभजे ॥

कर्मन्दित्वप्रदान् कर्मन्यासवर्त्मप्रदर्शकान् ।
सत्यप्रमोदसुगुरून् नौमि सत्कर्मसिद्धये ॥

कर्मनिर्णयटीकाया व्याख्यां भावप्रकाशिकाम् ।
कर्मादिविजयाख्यासम्भूषितां च करोम्यहम् ॥

# अथ नामजिज्ञासा

#### "कर्मनिर्णय"नाम्न आचार्योपज्ञत्वे प्रमाणप्रतिज्ञा

अथादौ तावट्टीकाकृत्पादाः परं ब्रह्म श्रीमदानन्दतीर्थार्यांश्च प्रणम्य "**व्याकुर्वे कर्मनिर्णयमि**"ति प्रतिजज्ञिरे ।

अत्र केचिद्[१] अस्य ग्रन्थस्य **खण्डार्थनिर्णय** इति बह्वर्थमन्वर्थं च नाम ग्रन्थकारैश्श्रीमदाचार्यैः कृतम् । **कर्मनिर्णय** इति तु निष्कारणं नूतनं नाम नामकरणानधिकारिणा जयतीर्थमुनिना कृतमित्याहुः। तन्न। उपसंहारप्राबल्यवादिभिश्श्रीमदाचार्यैः- १) एतद्ग्रन्थोपसंहारे कर्मसामान्यनिर्णयस्यैव कृतत्वेन, उपक्रमे च मङ्गलपद्य इज्यते, मखैः, सर्वयज्ञभुज इत्येतैः पदैश्च सूचितत्वेन

---

१ वन्नञ्जे गोविन्दाचार्याः (ब.गो)। तथाहि तद्वाक्यं खण्डार्थचन्द्रिकापुरोवाके (खं.चं.पु-७)प्रबन्धा प्रबन्धस्य नाम करोति । पिता पुत्रस्य । प्रबन्धा चास्य प्रबन्धस्य "खण्डार्थनिर्णयः" इति बह्वर्थमन्वर्थं च नाम कृतम् । नह्यन्यस्य कस्यापि नामकरणाधिकारः । अथापि कर्मनिर्णय इति नूतनं निष्कारणं नामकरणम् । इति ।

२) पद्मनाभतीर्थादिसम्प्रदायसिद्धबहुमूलकोशानवलम्ब्य टीकाकृत्पादैः[१] कृते व्याख्याने निर्दिष्टत्वेन ३) नारायणपण्डिताचार्याभिप्रेतत्वेन, ४) अणुमध्वचरिते स्फुटमेवोद्घोषणेन ५) ग्रन्थमालिकास्तोत्रे, तर्कताण्डवे च व्यासराजतीर्थ-श्रीमच्चरणैः[२] स्फुटमभिहितत्वेन, ६) वादिराजतीर्थश्रीमच्चरणैस्स्फुटं कथितत्वेन ७) रघूत्तमतीर्थराघवेन्द्रश्रीमच्चरणादिभिर्व्याख्यानकारैस्स्वीकृतत्वेन ८)

---

१ "श्रीमन्मध्वमुनीन्द्रचित्तजलरुड्धामस्फुरच्छ्रीरमा-
रामप्रेमसमृद्धवीक्षणलहर्यामज्जमानः सदा ।
धीमत्सन्ततिमुत्सवामृतनिधावामज्जयन् सन्ततम्-
मौनीन्द्रोऽद्य विराजते द्युतितरां श्रीमज्जयार्याभिधः ॥
मीमांसाद्वयपारगो गुरुरसौ यः काश्यपीये नये
साङ्ख्ये चाप्रतिमल्ल'ता'नयनिधिः त्र्यक्षोऽक्षपादोक्तिदृक् ।
यश्चार्वाकविशालमानदमनो दुर्वारबौद्धाम्बुधेः
पानानन्दितकुम्भसम्भवमुनिर्दिग्वाससामन्तकः ॥
यस्यात्यद्भुतवाहवाहनमहाशास्त्रप्रयोगादिषु
प्रावीण्यं प्रविकत्थितं पृथुमतिश्रीकामदेवेन च ॥"

इत्यवन्तीभूभृता पृथुमतिना कामदेवेन (कथोदन्ते बौद्धविद्यालयकुलपतिरिति विश्रुतेन) प्रकाममादृता अकामदेवाष्टीकाकृत्पादास्सर्वदर्शनसम्बन्धिनोऽपि ग्रन्थान्स्वदर्शनपथमानीय स्वविमर्शनपथमप्यानिन्युरिति विज्ञायत इतिहासेन । किमेतादृशाः संशोधने बद्धदीक्षाः कृतस्वमतरक्षाष्टीकाकृत्पादाः स्वमतीयमूलकोशान् न संशोधयाम्बभूवुरिति मतिर्विचारभुवमधितिष्ठेत् ? ।

२ व्यासराजतीर्थप्रभृतयष्टीकाकृत्पादोत्तरकालिकाष्टीकाकृत्पादानेवानुससुः । न तु स्वयं संशोधयामासुः । अतो न तेषां वचनानि प्रमाणीकर्तुं शक्यन्त इति न शङ्कनीयम् । सर्वेषामपि विशिष्टा परम्परा वर्तते । स्वस्वपरम्पराक्रमागतमूलकोशानवलोक्य, तत्र तत्र सञ्चरन्तो देशे देशे विशेषतो रजतपीठपुरेऽपि पृथग्विधान् ग्रन्थान् निशाम्य संशोध्यैव च व्याख्याने प्रववृतिर इत्येवावगम्यते । न्यायामृतादिग्रन्थेषु परेषां मूलग्रन्थान् तट्टीकाः, टिप्पणीश्चान्विष्य संशोध्य चोदाहृत्य विमृशन्त एते महानुभावास्स्वकीयानां मूलग्रन्थानां मूलकोशानां संशोधनमकृत्वैव व्याख्याने प्रावर्तिषतेति न हि सम्भाव्यते । विशेषतो वादिराजतीर्थसुरोत्तमतीर्थप्रभृतिभिरधिगततुळुलिपिभिस्तद्देशस्थाः सर्वेऽपि मूलकोशा अवलोकिता एव भवेयुः । तथापि तैष्टीकाकृत्पादपाठ एवान्वस्रियत, पलिमारुमठाधीशैः रघुवर्यतीर्थैरपि टीकाकृत्पाद-सम्मत एव तत्त्वसङ्ख्यानपाठोऽन्वसारि । तदेतदुत्तरत्र निरूपयिष्यते । तदनेन टीकाकृत्पादपाठः प्रधानमूलकोशावलम्बी परिशुद्धश्चेति निर्णीयते । अत उत्तरकालिकानामपि ज्ञानिनां वचनानि प्रमाणीकर्तुं शक्यन्त एव ।

अधिगततुळुलिपिभिस्सुरोत्तमतीर्थादिभिस्स्फुटमुत्कीर्तितत्वेन च **कर्मनिर्णयनाम्न** आचार्यकृतत्वनिश्चयात् ।

**"कर्मनिर्णय"नाम्न उपसंहारोपक्रमवाक्याभ्यां सम्प्रदायाच्च निर्णीतत्वकथनम्**

०१) तथाहि– ग्रन्थान्ते **"भगवद्भक्तिज्ञानवैराग्यपूर्वकं च कर्म कर्तव्यमि"**ति प्रतिज्ञाय कर्मेतिकर्तव्यताबोधकानि बहूनि प्रमाणान्युदाहरन्तश्श्रीमदाचार्या उपसञ्जह्रुः । तदनेनोपसंहारवाक्यसन्दर्भेणास्य कर्मनिर्णयनाम्न आचार्यकृतत्व-निश्चयो भवति । मङ्गलपद्योपक्रमे च **इज्यते, मखैः, सर्वयज्ञभुज** इत्येतानि पदानि चिकीर्षितस्यास्य ग्रन्थस्य कर्मनिर्णयनाम्न आचार्यकृतत्वे प्रमाणानि । तदेतदुभयस्य विवरणमुत्तरत्र करिष्यते ।

०२) अपि च साक्षाच्छ्रीमन्मध्वाचार्यशिष्याग्रेसराणां पद्मनाभतीर्थादीनां सम्प्रदायानुसारतो मूलकोशान् लब्ध्वा तदनुसारेण जयतीर्थश्रीमच्चरणाः **कर्मनिर्णय** इति नाम निर्दिदिशुः । अत इदं नाम श्रीमदाचार्यकृतमेवेति निश्चीयते ।

**कर्मनिर्णयनाम्न आचार्यकृतत्वनिर्णयोपयोगितया**
**नैकमूलकोशवत्त्वसमर्थनपूर्वकं टीकाकृतां मूलकोशानुपलम्भादिनिरासः**

मूलकोश[१] एव नालाभि टीकाकृत्पादैः, लाभे वा मूलपाठो नावलम्बित इत्यादयः कुशङ्किनामेव शङ्काः । अथापि शिष्यमनोव्याकुलतानिर्मूलनाय निरस्यन्ते ।

मूलकोश एव नालाभि टीकाकृत्पादैरिति तु, एक एव मूलकोशः, स च हृषीकेशतीर्थीय एवेति दुराग्रहनिबन्धनम् । योग्येषु तत्त्वज्ञानप्रसारार्थमेव

१ मूलकोशानवलम्बः । तदिदं गङ्गामपहाय तत्सङ्गिन्यां कुनद्यामवगाहनम् । तेनाशुद्धपाठानां पुरस्करणम् । खं.चं.पु-७

भुवमवतीर्णाश्श्रीमदाचार्या एकमेव मूलकोशं कारयामासुरिति त्वसम्भवदुक्तिकम् । बहवः कर्मन्दिशिष्याः कर्मिशिष्याश्च स्वाध्यायार्थं, अध्यापनार्थं व्याख्यानार्थं चाचार्यवाक्यानि स्वयमलिखन्तस्सर्वमूलमूलकोशमसम्पादयन्तो हृषीकेशतीर्थीय-मेकमेव सर्वदा शरणङ्गता इति तु न श्रद्धास्पदम् ।

किञ्च पूजार्थं संस्थानप्रतिमाः, व्याख्यानार्थं **सर्वमूलपुस्तकानि**, तप्तमुद्रादानार्थं शङ्खचक्रमुद्रे च श्रीमदाचार्येभ्य एव पद्मनाभतीर्थादयः प्रापुः । ततः शिष्यप्रशिष्यादि-पारम्पर्यक्रमेण तत्सम्प्रदायागता अन्येऽपि प्राप्नुवन्निति श्रीमठस्थप्राचीनहस्त-लिखितसम्प्रदायपद्धतिग्रन्थेनावगम्यते । मूलकोशानां बहुत्वाभावे नेदं युज्यत इति स्फुटमेव ।

किञ्च यद्यन्यत्र मूलकोशा एव न स्युस्तर्हि सर्वेषु मठेषु विद्यालयेषु पाठप्रवचनपरम्परैव न स्यात् । अस्मदीये श्रीमदुत्तरादिमठेऽद्यापि नित्यं पूज्यमानः प्राचीनमूलकोशावशेषो विराजते । अन्येष्वपि मठेषु स्युरेव । इदानीमनुपलम्भस्तु महति कालेऽनवरतबहुतरपाठप्रवचनप्रयुक्तजीर्णतमतानिमित्तक एव । तथा च सन्ति बहवो मूलकोशा इति स्फुटमेव ।

किञ्चानुव्याख्याने[१] युक्तिपादे नविलक्षणत्वाधिकरणे **"केवलं तु कथा वादो**

---

१ मूलकोशान्तरं दृष्ट्वा लिखितस्यापि मूलकोशत्वमेष्टव्यमेव । अन्यथाऽनुव्याख्यानविषये हृषीकेश-तीर्थीयस्य कथं मूलकोशत्वमिति शङ्कायाः कथं वारणम् ? तथाहि- युगपदेव अनुव्याख्यानमध्यायचतुष्टयं लेखयामासुराचार्या, एकैकमध्यायम् एकैकेनेति स्फुटमेव पण्डिताचार्यवचनात् (**युगपद्रचयन्नेनां कदाचित् स निरन्तरम् । चतुरश्चतुरः शिष्यांल्लीलयाऽलेखयत् खलु** ॥ सु. स-१५. श्लो-८९ ॥ (वेदा. टि) युगपदिति । एनां श्रीमदनुव्याख्यां रचयन् चतुरः कुशलः सश्श्रीमध्वः कदाचिन्निरन्तरं चतुरश्शिष्यान् युगपल्लीलया अलेखयत् खलु । स्वयं रचयन्नेवाध्यायचतुष्टयं चतुर्भिश्शिष्यैः निरन्तरमलेखयदित्यर्थः ॥) । तत्र एकमध्यायं हृषीकेशतीर्थैर्लेखयामासुराचार्या इत्यस्तु । परं सम्प्रत्युपलभ्यमाने हृषीकेशतीर्थीयेऽध्यायचतुष्टयमप्युपलभ्यतेऽनुव्याख्यानस्य । अध्यायान्तरविषये मूलकोशान्तरं दृष्ट्वा लिखितस्यास्य कथं मूलकोशत्वम्, कथंवा तत्तन्मूलकोशमनुसृत्य

**जल्पोर्थादिव्यपेक्षया। सतामेव कथा ज्ञेया वितण्डा त्वसतां सताम्। अप्रकाश्य स्वसिद्धान्तमसतां पक्षदूषणम्। उक्ते तैः प्रथमं माने वक्तव्यं तस्य दूषणम्। विद्यापरीक्षापूर्वैव....**" इत्यादिक्रमेण सम्प्रत्युपलभ्यमाने हृषीकेशतीर्थीये वर्तते। तत्क्रमेण च टीकाकृद्भिर्व्याख्यायि। परं क्वचित् "**केवलं तु कथा वादो जल्पोर्थादिव्यपेक्षया।** इत्यनन्तरं **सतामेवेत्यादि** सार्धश्लोको न पठ्यते। किन्तु **विद्यापरीक्षा....**" इत्यादिदशश्लोक्यनन्तरं पठ्यते। सन्न्यायरत्नावलीकारैः पद्मनाभतीर्थभट्टारकैस्तत्रैव च व्याख्यातम्। अत्र पृच्छामः- किं हृषीकेशतीर्थ-लिखितस्य मूलपाठत्वं किं वा पद्मनाभतीर्थभट्टारकैर्व्याख्यातस्य किं वोभयोः ? उभयोरित्येव वक्तव्यं गत्यन्तराभावात्। तथा च सन्त्यनेके मूलकोशास्सन्ति चात एवानेके मूलपाठा इति स्फुटमेव[१]।

सत्यम्। सन्ति बहवो मूलकोशा इति।

परं... नैकोऽपि मूलकोश उपालाभि टीकाकृत्पादैरिति चेत् । न । अप्रामाणिकत्वात् प्रमाणविरुद्धत्वाच्च।

तथाहि- "**ऐक्यप्रतीत्यभावेन भेद एव गवाश्वयोरि**"ति तृतीयाध्यायद्वितीय-पादीयानुव्याख्यानव्याख्यानसुधायां "**गवश्वयोरिति प्रमादपाठः। मूलकोशेष्व-दर्शनादि**"ति स्पष्टमवोचन् टीकाकाराः। तथा गीताभाष्यटीकाप्रमेयदीपिकायाम्

"एते सृती सोपाये ज्ञात्वाऽनुष्ठाय न मुह्यति। तच्चाह स्कान्दे-

**सृती ज्ञात्वा तु सोपाये अनुष्ठाय च साधनम्।**
**न कश्चिन्मोहमाप्नोति न चान्या तत्र वै गतिः**" ॥(गी.भा.)

---

लिखितानामन्येषाममूलकोशत्वम्। तथा च सन्त्यनेके मूलकोशा उपविष्टाष्टीकाचार्योत्सङ्गमुपारुह्येत्येव सुन्दरम्।

१ यद्यप्यत्र बहूनि प्रमाणान्युपलभ्यन्ते। तथापि दिग्दर्शनमात्रमत्र कृतमित्यवधेयम्।

इत्यष्टमाध्यायान्तिमश्लोकभाष्यव्याख्यानसन्दर्भे **"भाष्ये पुराणे च अनुष्ठाय इत्याकारस्थाने क्वचिदीकारो लेखकदोषेण पतितः। मूलपुस्तकेष्वदर्शनादि"**ति च स्फुटमवादिषुः। तेन मूलकोशोपलम्भोऽत एव मूलपाठावलम्बश्च स्फुट एव।

अवश्यञ्चैतदेवं विज्ञेयम्। **"व्याख्यास्यत्येष गोराडि"**ति स्वशिष्येभ्यः कथन-पूर्वकं श्रीमदाचार्याश्श्रीमज्जयतीर्थमुनीन् टीकारचनाय प्रेरयाम्बभूवुरिति श्रीमज्जयतीर्थशिष्यव्यासतीर्थकृतजयतीर्थविजयग्रन्थात्सिद्धम्। तत्कथं स्वकृत-सर्वमूलग्रन्थमूलकोशानलम्भयन्तश्श्रीमदाचार्याः टीकाकारान् जयतीर्थमुनीन् टीकारचनायै प्रेरयामासुरिति सम्भाव्यते।

किञ्च साक्षाच्छ्रीमदाचार्यमुखारविन्दात् तत्त्वोपदेशं लब्धवतां साक्षादेव सम्पादितमूलकोशानां पद्मनाभतीर्थानां नरहरितीर्थानां माधवतीर्थानामक्षोभ्यतीर्थानां तथा जयतीर्थमुनीनां न कालस्य महदन्तरमस्ति[१]। येन मूलकोशानुपलब्धि-स्सम्भाव्येत। इदानीमनुपलम्भात् प्राचीनकाले वर्तमानैश्श्रीमदाचार्याणां कालतो नेदिष्ठैरपि महद्भिर्नालाभीति कथनं तु दुस्साहसमेव। नैवं कथने पूर्वाग्रहादन्यत् कारणं पश्यामः।

किञ्च नैकः, किन्तु नैके मूलकोशास्सङ्गृहीता व्याख्यानकर्मणि टीकाकृद्भि-रित्यनुभवसाक्षिकं टीकास्वधीतिनाम्। अत एव प्रथमं स्वयं बहुमूलकोशानुसारिणं पाठं व्याख्याय तत्र तत्र क्वाचित्कमूलकोशान्तर्गतमपि मूलपाठं व्याकुर्वन्ति टीकाकृत्पादाः।

---

१ उपलब्धशासनेन तत्रभवन्तश्श्रीमज्जयतीर्थपूज्यचरणाः १२९५ शा.शके (१३७३) कामदेवेन मानिता इति विज्ञायते। अयं च कालो भगवत्पादकालात् शतेनापि वत्सरैर्नान्तरित इति स्फुटम्। तावत्येवाल्पीयसि काले हृषीकेशतीर्थीयातिरिक्तानां निखिलानां मूलकोशानां विनाशः, न कस्यापि तदुपलब्धिः, इति तु कल्पनाया दुर्विलासमात्रम्।

**प्रसङ्गात् टीकाकृतां मूलकोशानुपलम्भे तत्त्वनिर्णयटीकास्थं "प्रक्षिप्तमित्याहुः" इति वाक्यं प्रमाणयतां मतस्य निरासः**

न च [१]"**इतःपरं प्रत्यक्षानुमानसिद्धत्वे च इत्यतः पूर्वं वाक्यद्वयं मूलकोशेष्व-दर्शनात्प्रक्षिप्तमित्याहुः। तथापि गङ्गाजलानुप्रविष्टक्षुद्रनदीजलस्येव तस्याप्युपा-देयत्वाद्व्याख्यानं क्रियत**" इति तत्त्वनिर्णयटीकावलोकनेन मूलकोशा न प्रापिषत[२] टीकाकारैरिति गम्यते। अन्यथाऽऽहुरिति नोच्येतेति वाच्यम्। प्रागुक्तनिरवकाश-प्रमाणैर्मूलकोशानां बहुत्वस्य, टीकाकृतां व्याख्यानस्य बहुमूलकोशानुसारित्वस्य च सिद्धत्वेनास्य वाक्यस्य मूलकोशानुपलम्भासाधकत्वात्। तथा चायमाशयष्टीका-काराणाम्। इदं वाक्यद्वयं सम्प्रदायविदः प्रक्षिप्तमित्याहुः। न केवलं सम्प्रदायः, किन्तु मूलकोशेष्वदर्शनमप्यत्र प्रमाणमुपलभामहे। परं तत्त्वोद्योतान्तिमश्लोकवत् श्रीमदाचार्यानुमत्या प्रक्षिप्तत्वात्, पूर्वेणान्योन्यं च सङ्गतार्थत्वाच्च, अस्य वाक्य-द्वयस्याविच्छिन्नप्रवृत्तये, तत्त्वमार्गगमने सर्वोपजीव्यैष्टीकाकारैः पद्मनाभतीर्थ-भट्टारकैर्व्याख्यानं व्यधायि। अत एव तन्मार्गमनुसरद्भिरस्माभिरपि व्याख्यायत इति[३]। तमेतमाशयमजानाना यथाकथाच 'टीकाकृतां मूलकोशानुपलम्भो मूलपाठानवलम्बश्चे'ति कथयन्तीत्यतिहेयमतोऽखिलैः।

---

१ विमतं सकर्तृकं कार्यत्वाद् घटवदित्युक्ते विमतं विकर्तृकमस्मत्सम्मतकर्तृरहितत्वादात्मवदित्यनुमान-विरोधात्। अकार्यत्वमुपाधिरित्युक्ते शरीरिजन्यत्वमितरत्राप्युपाधिरित्युत्तरम्। इति वाक्यव्याख्यान-सन्दर्भ इदं टीकवाक्यमुपलभ्यते। परं विमर्शकाः केचनास्य टीकावाक्यत्व एव विप्रतिपद्यन्ते।

२ यद्यप्यत्र वैयात्यवता, दैवात्कथञ्चित् तत्त्वनिर्णयमूलकोशमात्रस्योत्सन्नत्वादलाभोक्तिस्तन्मात्र-विषयकतया सम्भावयितुं शक्या तथापि वक्ष्यमाणगत्यन्तरस्यापि सम्भवादुक्तरीत्यैव सम्भावनीयमित्यत्र विनिगमनाविरह इति भावः।

३ ननु कुतस्तर्हि प्रक्षिप्तत्वांशस्तैर्नोक्त इति चेत्, तदानीं सुप्रसिद्धत्वात्। कुतस्तर्हि एतैरुच्यत इति चेत्। शृणु। प्राचीनैरपि व्याख्यायि,अस्माभिश्च, इति शिष्याणामस्यापि मूलवाक्यत्वभ्रमस्स्यात्। तन्मा भूदिति वस्तुतत्त्वप्रदर्शनशीलैस्संशोधकभूषामणिभिश्श्रीमट्टीकाकृत्पादैर्वस्तुस्थितिरियमावेदिता। ननु कुतस्तर्हि तत्त्वोद्योतान्तिमश्लोका न व्याख्याताः प्राचीनैरिति चेदुक्तमुत्तरं टीकायामेव 'अन्योन्यं सङ्गत्यभावादि'ति। परमेषामविच्छिन्नप्रवृत्तय, उपाधिखण्डनटीकायामन्त एष्वन्तर्गतं "द्रवत द्रवताशु" इतीमं श्लोकमुदाहरद्भिः पद्मनाभतीर्थभट्टारकैः प्रयतितमित्यवधेयम्।

तथा च टीकाकृत्पादैः प्राचीनानुसृतमार्गेण बहुमूलकोशानुसारी शुद्धः पाठ एव व्याख्यायीत्यवधेयम्। अत एव तदुत्तरकालीनैस्सर्वैर्[१]रपि स एव पाठोऽन्वस्रियतेति विदितमेव समेषां विदुषामिति दिक्।

**"कर्मनिर्णय"नाम्नो नारायणपण्डिताचार्यसूचितत्वान्वर्थकत्वयोः समर्थनम्**

०३) अपि च सुमध्वविजये षोडशे सर्गे–

**सर्वज्ञोऽप्ययमधिकं न यज्ञभङ्गीं**
**संवित्ते यतिरिति बद्धनिश्चयोऽसौ।**
**आभान्तं परिषदि मत्सरादपृच्छत्**
**कर्मार्थश्रुतिगहनार्थखण्डभावम्**[२] ॥ ४२ ॥

---

१ न केवलं श्रीमट्टीकाकृत्पादपरम्पराप्राप्तैर्महनीयैर्व्याख्यातृभिः, किन्तु तुळुमण्डलभूषामणिभिर्वादिराजतीर्थादिभिरपि। किं बहुना हृषीकेशतीर्थसंस्थानमधिरूढैर्हृषीकेशतीर्थमूलकोशानुसारेण लिपिकृद्भी रघुवर्यतीर्थैरपि। ('श्रीशप्रीत्यै...' इति प्रमेयनवमालिकाप्रथमश्लोकव्याख्याने सौरभप्रकाशिकायां- 'स्वतन्त्रमस्वतन्त्रं च द्विविधं तत्वमिष्यते। इत्यादावन्यपरमपि भक्त्यानुष्ठितं तत्पदकीर्तनं साधयत्येव मङ्गलम्। यथोक्तं– अन्यपरमपि तद् भक्त्यानुष्ठितं साधयत्येवाखिलमङ्गलानि। इति। इति रघुवर्यतीर्थैर्मङ्गलश्लोकसहितं हृषीकेशतीर्थीयं तत्वसङ्ख्यानपाठं परित्यज्य टीकाकृदादृतो मङ्गलश्लोकरहितस्तत्वसङ्ख्यानपाठ एवादृत इति बोध्यम् )

२ अयं श्लोको वेदाङ्गतीर्थैरेवं व्याख्यातः- (प.दी.) सर्वज्ञ इति। अयं श्रीमध्वः सर्वज्ञोऽपि यतिः, हेतुगर्भविशेषणमेतत्,यतित्वादित्यर्थः, अयं सर्वज्ञोऽपि यतित्वाद् यज्ञानधिकारित्वात् **यज्ञभङ्गीं** यज्ञप्रकारं अधिकं न संवित्ते न जानाति इति बद्धनिश्चयोऽसौ जनः परिषदि सभायामाभान्तं शोभमानं श्रीमध्वाचार्यं कर्मार्थश्रुतिगहनार्थखण्डभावम्, **कर्मपरा श्रुतिः कर्मार्थश्रुतिः, ब्राह्मणमित्यर्थः,** पदसमन्वयपक्षे सर्वश्रुतीनां परममुख्यवृत्त्या ब्रह्मपरत्वेऽपि ब्राह्मणस्य वाक्यसमन्वयपक्षे भगवत्पूजार्थत्वेन कर्मपरत्वाभ्युपगमात्। तथाच **कर्मार्थश्रुतौ बह्वृचब्राह्मणे** विद्यमानस्य गहनार्थस्य दुर्विज्ञेयार्थस्य खण्डस्य- "छन्दसां वै षष्ठेनाह्नाऽऽप्तानां रसोऽत्यनेदत्। स प्रजापतिरबिभेत्। पराङ्ङयं छन्दसां रसो लोकानत्येष्यतीति। तं पुरस्ताच्छन्दोभिः पर्यगृह्णान्नाराशंस्या गायत्र्या रैभ्या त्रिष्टुभः" इत्यस्य खण्डस्यार्थं मत्सरादपृच्छत्। "दुहियाचि" इत्यादिना द्विकर्मकत्वम् ॥ ४२ ॥ इति

**छन्दोभ्यश्च्युतरससङ्ग्रहप्रवीणान्**
**षष्ठेऽह्नि प्रतिविहितान् प्रजाधिपेन ।**
**नाराशंस्यचरमचारुमन्त्रभेदान्**
**ऊचेऽसौ तमभिदधद् विसंशयांशः ॥ ४३ ॥**

**पाण्डित्यं परममवेत्य तस्य तादृक्**
**सङ्घर्षक्षुभितमना विपक्षसङ्घः ।**
**नार्थस्स्यादयमिति वर्णयन्नथ त्वं**
**तं ब्रूहीत्युरुमतिनेरितोऽद्रवद् द्राक् ॥ ४४ ॥**

अत्र यज्ञप्रकारविषये परीक्षार्थमेवोजेर्यपण्डितानां प्रवृत्तिः । अत एव **कर्मार्थश्रुतौ** बह्वृचब्राह्मणे विद्यमानस्यैव खण्डस्यार्थः पृष्टः । ततः श्रीमदाचार्यास्स्पष्टं तस्य खण्डस्यार्थं व्यवरिषत । ते पण्डिता नायमर्थ इत्यवादिषुः । कथ्यतां भवद्भिस्तर्हि तस्य खण्डस्यार्थ इति श्रीमदाचार्यैरीरिताः कथयितुमपारयन्तः पलायन्तेत्युक्त्वा तदुत्तरश्लोके–

**सोऽपृच्छत् तमथ महाह्वयोपसर्गा**
**यत्रोक्ता मनुचरणोपसृज्यरूपाः ।**
**तस्यार्थं वचनचयस्य तं ब्रुवाण-**
**स्स्थैर्यार्थं सपदि स लेखयाम्बभूव ॥ ४५ ॥**

इत्यत्र पुनस्ते पण्डिता आगत्य तत्रैव कर्मार्थे बह्वृचब्राह्मणे वर्तमानस्य **"महानाम्नीनामुपसर्गानुपसृजती"**त्यादिखण्डान्तरस्यार्थमप्राक्षुः । तस्याप्यर्थं श्रीमदाचार्या विस्पष्टं न्यरूरुपन् । स्थैर्यार्थं लेखयाम्बभूवुश्चेत्युक्तम् ।

अत्र यद्यपि नारायणपण्डिताचार्यैस्स्पष्टं ग्रन्थस्य नाम न निरदिश्यत । तथापि पूर्वतमश्लोके बह्वृचब्राह्मणं **कर्मार्थश्रुति**पदेन कथयद्भिस्तदेकदेशस्योत्तर-

श्लोकोक्तस्य खण्डान्तरस्यार्थः **कर्मैवेति** समसूचि । **कर्मार्थश्रुतिः**– बह्वृचब्राह्मणम्–ऐतरेयब्राह्मणम् । तदेकदेशत्वादेव खण्डोऽपि **कर्मार्थः** । खण्डार्थस्तर्हि **कर्मेति** समपद्यत । खण्डार्थभूतस्य **कर्मणो निर्णयो** यतोऽस्माद् ग्रन्थाद्भवति तस्मादयं ग्रन्थः **कर्मनिर्णयः**, **खण्डार्थनिर्णयः**, **खण्डार्थ**[१] इत्यन्वर्थनामानि ग्रन्थकर्तृभिर्भगवत्पादैरेव कृतानि भजत इति नारायणपण्डिताचार्याभिप्रायो विज्ञायते ।

**कर्मनिर्णयनाम्नः प्राधान्यस्य,**
**खण्डार्थनिर्णयनाम्नः प्रासङ्गिकत्वस्य च प्रतिपादनम्**

किञ्चानेन कथाप्रसङ्गेन, कर्मकाण्डे विद्वद्भिरुजेर्यपण्डितैर्यतिरयं कर्मकाण्डं न जानातीति तत्रैवैनं जेष्याम इति इत्याशया खण्डव्याख्याने प्रेरितत्वात्, श्रीमदाचार्यैरपि स्वस्य कर्मकाण्डनिर्णयवत्त्वज्ञापनद्वारा तेषां तदाशां दूरीकृत्य कर्मकाण्डयथार्थनिर्णयोत्पत्तय एव खण्डव्याख्याने प्रवृत्तत्वात्, खण्डार्थव्याख्यानस्य प्रासङ्गिकत्वेन, पृच्छकानामुजेर्यपण्डितानां प्रवक्तॄणां ग्रन्थकर्तॄणामाचार्याणां च खण्डार्थव्याख्याने प्रधानोद्देशाभावादुभयोरपि कर्मनिर्णय एव प्रधानोद्देशभावाच्च **कर्मनिर्णय** नामैव प्रधानं=पृच्छकप्रवक्तृप्रधानान्तर्यानुगुणम्, **खण्डार्थनिर्णय** इति तु नाम प्रसङ्गानुगुणमिति स्फुटं विज्ञायते । तथाचास्य ग्रन्थस्याचार्यकृतान्वर्थकानेकनामवत्त्वं स्फुटमेव[२] ।

---

१ तत्संयोजनप्रकारश्च श्रीमध्वाचार्यैः **खण्डार्थाख्यप्रकरणे** स्वयमेवोक्तः । वेदा.टि । सु-१६. श्लो-४५ ।

२ अत एव एकैकमूलकोशलेखका एकैकं नाम भगवत्पादकृतमेव स्वीचक्रुः । पद्मनाभतीर्थीयाद्यनेकमूलकोशानुसारेण श्रीमट्टीकाकृत्पादाः **कर्मनिर्णय** इति, हृषीकेशतीर्थीयमूलकोशानुसारेण पलिमारुमठाधीशाश्श्रीरघुवर्यतीर्थाः **खण्डार्थनिर्णय** इति विष्णुतीर्थीयमूलकोशानुसारेण सोदेमठाधीशा वेदाङ्गतीर्थाः **खण्डार्थ** इति ।

**एकस्यैव ग्रन्थस्य नैकनामकृतेः शास्त्रवाङ्मयप्रसिद्धत्वप्रदर्शनम्**

नन्वेकस्यैव ग्रन्थस्यानेकानि नामानि ग्रन्थकृत्कृतानि कुत्रापि न दृश्यन्त इति चेत्। न। बहुत्र दर्शनात्। तथाहि- स्वयं भगवान् व्यास एव **"महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यत"** इति निर्वचनपूर्वकं **महाभारतेति** नामोक्त्वा **"भारतं सर्ववेदाश्च"**,**"शास्त्रेषु भारतं सारमि"**त्यादिषु बहुषु स्थलेषु **भारतेति** नामोक्त्वा **"ततो जयमुदीरयेदि"**त्यत्र **जयेति** नामाप्यभिदधौ।

इमं सत्सम्प्रदायपथमेवानुपतन्तश्श्रीमदाचार्या अप्यनुव्याख्यानस्य **अनुभाष्यमि**त्यपि नाम चक्रुः। तदेतदुभयनाम्नस्स्वकृतत्वज्ञापनायैव न्यायविवरणे **"कृत्वा भाष्यानुभाष्येऽहमपि वेदार्थसत्पतेः। कृष्णस्य सूत्रानुव्याख्यासन्न्यायविवृतिं तथा। करोमि....इति"** प्रतिजज्ञिरे। अत्र पूर्वार्धे **अनुभाष्ये**त्यनेन, उत्तरार्धे **अनुव्याख्ये**त्यनेन चानुव्याख्यानमेकमेव ग्रन्थं स्वीकुर्वन्तो नामद्वयस्यापि स्वकृतत्वं ज्ञापयन्ति। अन्यथा **भाष्यानुव्याख्ये** इति पूर्वत्र, **सूत्रानुभाष्य**....इति वोत्तरत्रावक्ष्यन्। अत एव ह्याचार्यकृतानामनेकग्रन्थानामप्यनेकनामवत्त्वं प्रसिद्धम्।

इममेव च सत्सम्प्रदायमनुसरद्भिर्नारायणपण्डिताचार्यैरपि स्वकृतस्य सुमध्वविजयव्याख्यानस्य द्वे नामनी अकारिषाताम्। **"भावप्रकाशनम्"** इति **"भावदीप"** इति च। **"भावप्रकाशनमिदं हरये नमोऽस्तु"** इति सुमध्वविजयटीकान्ते, **"व्यधित भावदीपाह्वयम्"** इतिप्रमेयनवमालिकायांस्वयंनारायणपण्डिताचार्यैरेवाभिधानात्[१]। भावप्रकाशनमिति तैरुल्लेखे कृतेऽपि भावप्रकाशिकेत्येव प्रसिद्धिरस्ति।

---

१ अयं विषयो बन्नञ्जे गोविन्दाचार्यैरपि भावप्रकाशिकापादटिप्पण्यामुक्तः। तथाहि तद्वाक्यम्- अस्या भावप्रकाशिकाया भावदीप इति च नामान्तरम्। स्वयमेवाह हि प्रमेयनवमालिकायाम्। व्यधित भावदीपाह्वयम् इति। इति

तमेतं सत्सम्प्रदायमनुवर्तयन्तश्श्रीमट्टीकाकृत्पादा अप्यनुव्याख्यानव्याख्यानस्य **"विषमपदवाक्यार्थविवृतिरि"**ति **"न्यायसुधे"**ति च नाम चक्रुरित्यवधेयम् । एवमेव तत्सम्प्रदायमनुसरद्भिर्बहुभिरपि ग्रन्थकृद्भिः स्वग्रन्थस्य नैकानि नामानि चक्रिर इति प्रसिद्धमेवेत्यलम् ।

**महाजनपरिगृहीतत्वलिङ्गेन "कर्मनिर्णय"नाम्न आचार्यकृतत्वसमर्थनम्**

०४) अपि च अणुमध्वचरिते कर्मनिर्णय इति नाम दृश्यते । **"आगत्य भारतस्याथ तात्पर्यं कर्मनिर्णयम्"** इति । इदमणुमध्वचरितं वायुपुराणोक्तमिति केचित् । हृषीकेशतीर्थकृतमिति केचित्[१] । अनेन कर्मनिर्णय इति नाम वायुपुराण-कर्तुर्व्यासस्य वा हृषीकेशतीर्थानां वा सम्मतमिति ज्ञायते ।

०५) अपि च व्यासराजश्रीमच्चरणा ग्रन्थमालिकास्तोत्रे **"कर्मनिर्णयनामानं ग्रन्थं न्यायार्थबृंहितमि"**ति स्फुटमुद्घोषयामासुः । तथा तर्कताण्डवे विधिवादेऽपि **"अत एव कर्मनिर्णये लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति, लिङादेस्त्विष्टसाधनता-र्थत्वेनैव कृतार्थत्वमिति चोक्तमि"**ति निरूपयामासुः ।

०६) अपि च वादिराजश्रीमच्चरणैर्युक्तिमल्लिकायां फलसौरभे **"यजत्रा याजकास्सर्वे यज्ञेषूक्तिविशारदम् । सुखेन भरितास्सन्तो दृष्ट्वा श्रुत्वा च तद्वचः । प्रमदन्ति प्रहृष्यन्ति कर्मनिर्णयकोविदम्"** इति स्पष्टं **कर्मनिर्णय**शब्दः प्रयुयुजे ।

०७) अपि च रघूत्तमतीर्थश्रीमच्चरणैः, राघवेन्द्रश्रीमच्चरणैः, सत्यनाथतीर्थ-श्रीमच्चरणैः, सत्यधर्मतीर्थश्रीमच्चरणैः, श्रीनिवासतीर्थैः, छलारि नरसिंहाचार्यैः,

---

१ बन्नञ्जे गोविन्दाचार्यास्तु "अस्य कर्ता न ज्ञायते। हृषीकेशतीर्थैरेव रचितमिति वदन्ति" इति बृहतीप्रकाशनतो मुद्रिते प्रमेयनवमालिकानाम्नि पुस्तके चरमभागे मुद्रितस्याणुमध्वचरितस्य पाददटिप्पण्यामलिखन् ।

व्यासतत्त्वज्ञतीर्थानां पूर्वाश्रमपितृपादैर्वेङ्कटनरसिंहाचार्यैस्तथाऽन्यैरपि बहुभिर्व्याख्यानकारैरन्वर्थकतरं **कर्मनिर्णयेति** नामैव स्वीचक्रे[१]।

०८) (क)अपि च सुरोत्तमतीर्था वादिराजतीर्थश्रीचरणानां पूर्वाश्रमानुजा भण्डारकेरिमठाधीशा युक्तिमल्लिकाफलसौरभस्य ६६६ श्लोकस्य व्याख्याने "**शवसा कठिणब्राह्मणखण्डार्थकथनरूपकर्मनिर्णयाख्यग्रन्थश्रवणजनितसुखेन प्रमदन्ति प्रकर्षेण सन्तोषं कुर्वन्तीति।** 'छन्दःखण्डार्थवादी जितकुमतिकुल'इत्यणुमध्वविजयवचनात्प्रसिद्धोऽयमर्थ" इत्यवादिषुः। छन्दःखण्डार्थवादीत्यणुमध्वविजयवचनमुदाहृत्यापि **कर्मनिर्णयाख्येत्यगद्गदमगादिषुः।**

(ख) अपि च विश्वपतितीर्थाः पेजावरमठाधीशा "**युक्ताया युक्तिमालाया**" इति सुमध्वविजयपञ्चदशसर्गीयनवतितमश्लोकीयव्याख्याने "**तथा च श्रीमदाचार्यकृतग्रन्था**" इति सर्वेषामाचार्यकृतानां ग्रन्थानां नामानि वदन्तः **कर्मनिर्णय** इत्येवावदन्।

---

१
| | |
|---|---|
| **रघूत्तमतीर्थाः** | रूढियोगौ विना इत्यस्य कर्मनिर्णयटीकायां न केवलो रूढो नापि केवलो यौगिकोऽस्तीत्यर्थ इति मुख्यवृत्तिद्वयसमुच्चयपरत्वेन व्याख्यातत्वात्। (तत्त्वप्रकाशिकाभावबोधः पृथगुपदेशाधिकरणम्) |
| **राघवेन्द्रस्वामिनः** | व्याख्यास्यामि यथाबोधं कर्मनिर्णयपञ्चिकाम्। |
| **सत्यनाथतीर्थाः** | कर्मनिर्णयटीकाया भावं वक्ष्यामि शक्तितः। |
| **सत्यधर्मतीर्थाः** | कर्मनिर्णयटीकायां लक्षणाया अपि भगवन्निष्ठत्वोक्तेः। श्रीपादपादुकास्तोत्रव्याख्याने। |
| **श्रीनिवासतीर्थाः** | कर्मनिर्णयसट्टीकां व्याख्यास्येऽहं स्वशक्तितः। |
| **छलारि नरसिंहाचार्याः** | कर्मनिर्णयसट्टीकां व्याख्यास्येऽहं यथामति। |
| **वेङ्कटनरसिंहाचार्याः** | निर्मलत्वाय मनसः कर्मनिर्णयपञ्चिकाम्। |

(ग) अपि चानन्दनिधितीर्थाः पुत्तिगेमठाधीशा इमं ग्रन्थं लिखित्वा अन्ते-

**कर्मनिर्णयः समाप्तः । श्रीकृष्णविट्ठलहयग्रीवार्पणमस्तु ।**
**अशेषमन्त्रोपनिषत्पुराणवेद्यस्य प्रीत्यै तुरगाननस्य ।**
**व्यलेखि खण्डार्थविनिर्णयोऽलं निध्युत्तरानन्दपदाभिधेन ॥**

इति नामद्वयमपि निर्दिशन्ति। [एतत्पत्रचित्रं परिशिष्टे द्रष्टव्यम् 102]

[१]रघुवर्यतीर्थेभ्यः प्राचीना विश्वपतितीर्थसुरोत्तमतीर्थानन्दनिधितीर्थादयो महाज्ञानिनस्तुळुलिपिपरिज्ञानपरिपूर्णा अत एवावलोकिततुळुलिपिनिबद्धविविध-मूलकोशा अपि **कर्मनिर्णयेति** नामोदघोषयन्। तथा च विमर्शनशीलैर्व्याख्या-कुशलैर्विबुधयतिमणिभिरुल्लिखितत्वेन **कर्मनिर्णयनाम्न** आचार्यकृतत्वमवसीयत इति सर्वमवदातम्।

### "कर्मनिर्णय"नाम्न एव टीकाकृता स्वीकारे प्रयोजनकथनम्

ननु तर्हि सत्स्वप्यनेकेषु नामसु कर्मनिर्णयनाम्न एव स्वीकारे कः प्रयोजनविशेष इति चेत्। श्रुणु। खण्डार्थनिर्णय इत्येवोक्तौ न ज्ञायते कस्य खण्डस्यार्थो निर्णीयतेऽत्रेति। कस्यचित्खण्डस्यार्थो निरणीयतात्रेत्येव ज्ञायते। कर्मनिर्णय इत्युक्तौ तु कर्मैव निरणाय्यत्रेति व्यक्तमेवावगम्यते। ननु तथापि खण्डार्थभूतस्य

---

१ अथ चात्र पृच्छामः। खण्डार्थनिर्णयनाम्नः कथमाचार्यकृतत्वं निश्चीयते ? इति। रघुवर्यतीर्थैर्लिखितत्वादिति त्वपर्याप्तम्। तैरेव कृत्वा लिखितमिति वदन्तं प्रति किमुत्तरम् ? ननु हृषीकेशतीर्थमूलकोशानुसारेण केवलं लिपिकृतस्ते न नामकरणाधिकारिण इति चेत्। श्रीमट्टीकाकृत्पादा अपि पद्मनाभतीर्थीयाद्यनेकमूलकोशानुसारेण परिशुद्धं व्याख्यातार एव केवलमिति समस्समाधिः। अथ च हृषीकेशतीर्थैरेव कृत्वा लिखितमित्याक्षिपन्तं प्रति किमुत्तरम्। अयि भोः...तेऽपि लिपिकृत एव न नामकरणाधिकारिणः,तत्कथमनर्थसाधनं तत्कुर्वन्तीति चेत्समस्समाधिः। यत्किञ्चिदन्यथा-संस्थमन्यथाज्ञातमेवानर्थकारणं किमुतान्यथाकरणमिति तत्त्वमनुसन्दधानाष्टीकाकृत्पादाः कथं नामान्तरं कुर्युरित्यलम्।

०५) **"मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा"** इत्यादेरुदाहरणेन स्वातन्त्र्याभिमानपरित्यागपूर्वकं कर्तव्यत्वेन **कर्मणो निर्णयो** यस्मादिति निरुक्तिं वेदयामासुराचार्यश्रेष्ठाः ।

०६) **"श्रद्धावन्तोऽनसूयन्त"** इत्यादेरुदाहरणेन श्रद्धापूर्वकं कर्तव्यत्वेन **कर्मणो निर्णयो** यस्मादिति निरुक्तिं वेदयाम्बभूवुराचार्यपुङ्गवाः ।

०७) **"परं भावमजानन्तो मम भूतमहेश्वरम्"** इत्यादेरुदाहरणेन भगवत्स्वातन्त्र्य-ज्ञानपूर्वकं कर्तव्यत्वादिना **कर्मणो निर्णयो** यस्मादिति निरुक्तिं व्यजिज्ञपन्नाचार्यकुञ्जराः ।

०८) **"विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणमि"**त्यादेरुदाहरणेन भगवदायत्त-फलसम्बन्धवत्त्वेन **कर्मणो निर्णयो** यस्मादिति निरुक्तिं ज्ञापयाम्बभूवु-राचार्यव्याघ्राः;

> **"यत्सम्बन्धेन कर्माणि फलवन्ति भवन्ति हि ।**
> **यस्सर्वकर्मणां कर्ता तस्मै भगवते नमः ॥"**

इत्यन्ते कथयन्तश्श्रीमट्टीकाकृत्पादाः,

> **"यदापादनरूपाणि कर्माणि निखिलान्यपि ।**
> **कर्मणां फलदाता यस्तस्मै श्रीपतये नमः ॥"**

इति वदन्तो राघवेन्द्रश्रीमच्चरणाश्च ।

०९) **"यदेव विद्यया करोति श्रद्धयोपनिषदा"** इत्यादेरुदाहरणेन योग्यतानुसारेण कर्तव्यत्वेन **कर्मणो निर्णयो** यस्मादिति निरुक्तिं ज्ञापयाम्बभूवुराचार्य-शार्दूलाः ।

१०) "**निराशीर्निर्ममो भूत्वा**" इत्यादेरुदाहरणेन फलापेक्षया विना कर्तव्यत्वेन **कर्मणो निर्णयो** यस्मादिति निरुक्तिं ज्ञापयाञ्चक्रुराचार्यर्षभा इति दिक्[१] ।

तदेवं प्रागुक्तनिरवकाशप्रमाणैः, श्रीमदाचार्यैरेव **कर्मनिर्णय** इति नाम चक्र इति, अत एव तत्सम्प्रदायप्राप्तमिति च समसैत्सीत् । तथा कर्मनिर्णय इति नाम निरुक्ताभिर्निरुक्तिभिरत्यन्तमन्वर्थकं बह्वर्थकमिति च निरधारीत्यलम् ।

**॥ इति नामजिज्ञासा ॥**



१ इतः परमुत्तरत्रानेकाभिर्निरुक्तिभिः प्राय एतद्ग्रन्थोक्तसर्वार्थसङ्ग्राहकत्वमस्य नाम्नः प्रदर्शितम् । तथापि दशेति पूर्णमुद्दिष्टमिति दशैव इह निवेशिताः । शिष्टाः परिशिष्टे निवेशिताः । जिज्ञासुभिस्तत्रैव ता अनुसन्धेयाः ।

## अथ *युक्त्युपेतविमर्शः

**(०१)कर्मनिर्णयः-तत्रैक आहुरगुणं ब्रह्मेति । न तद्युक्तं श्रुतियुक्तिविरोधात् ॥**

**टीका**- एतत्समर्थयितुं मायावादिनां विप्रतिपत्तिं तावदुद्भावयति- **तत्रेति** । तत्रावसरे । एतदुक्तं भवति । ब्रह्म तावन्निर्गुणम् । "केवलो निर्गुणश्च" इत्यादिश्रुतेः । सगुणत्वसाधकप्रमाणाभावाच्च । तस्य चाशेषगुणपूर्तिप्रत्याशा जलाभ्यवहारासमर्थस्य मुमूर्षोश्शाष्कुलीभक्षणप्रत्याशायिता । तथा च कथमसिद्धयाऽशेषगुणपूर्त्या ब्रह्मणो महत्त्वसाधनम् । किन्तु सर्वात्मकत्वेनेति । प्रतिविधत्ते- **नेति** । युक्तशब्दश्शोभन-पर्यायः । यथाऽऽह भिक्षुः । तथा च युक्तिविरोधान्न युक्तमिति न साध्याविशिष्टता । युक्त्युपेतमिति व्याख्यानमसत् । प्रमाणाधीनत्वात्प्रमेयसिद्धेः प्रामाणिकमिति वक्तव्यत्वात् । लक्षणायाः प्रयोजनाभावात् । प्रतिज्ञाध्याहारप्रसङ्गाच्च । श्रुतियुक्ति-विरोधादिति तत्र हेतुं वदता ब्रह्मणस्सगुणत्वेऽशेषगुणपूर्णत्वे च प्रमाणसद्भावोऽपि सूचितः । यद्यप्यत्र महतां प्रत्यक्षमपि ग्रहीतुं शक्यते । तथापि तत्सद्भावश्श्रुत्यादिनैव साधनीय इति गौरवान्नोपात्तम् । न त्वभावात् । उत्तरत्र ग्रहणाच्च ।

#### कर्मविजयः

अत्र युक्त्युपेतमिति यद्युक्तशब्दस्य व्याख्यानं तस्य समर्थनाय [२]केचिदेवं व्याख्यान्ति ।

---

* युक्त्युपेतमित्यस्य विमर्शः, युक्त्युपेतश्च विमर्श इत्यर्थः । एवमुत्तरत्र बुद्धिपूर्वमित्यस्य विमर्शः, बुद्धिपूर्वकश्च विमर्श इति, मुख्यवृत्तेर्विमर्शः, मुख्यवृत्त्या च विमर्शो न तूपचारत इत्यर्थद्वयं बोध्यम् ।

२ ब.गो.खं.चं.- ७३,७४

**विमर्शनसौकार्याय खण्डार्थचन्द्रिकाया यथाग्रन्थमनुवादः ।**

युक्तिरिति साङ्गत्यम् । युक्तिरित्यौचित्यम् । तदेतदाह- **न युक्तमिति** । असङ्गतमित्यर्थः । अनुचितमित्यर्थः । अथवा मनसो लगनं युक्तिः । न तद् युक्तम्- न तन्मनसि लगतीत्यर्थः । शोभनं सुन्दरमित्यादिरार्थिकोऽर्थः । यन्मनसि न लगति न नूनं तच्छोभनं भवितुमर्हतीति ॥

अथवा युक्तिरिति वाचोयुक्तिः । कयाऽपि वाचोयुक्त्या आगमेन वा तर्केण वा न तत् साधयितुं शक्यमित्यर्थः ॥

अथवा युक्तिरित्यनुमैव । कथायां श्रुतिरप्यनुमात्वेनैव ह्युपयुज्यते । इदमित्थं भवितुमर्हति, इदं नेत्थम्, इति श्रुतेरिति । तस्मादिदमसदिति वचनस्य पूर्वाग्रहादन्यत् कारणं नोत्पश्यामः ॥

अथ कथमनुमिमीषे ? शृणु सावधानतया । अत्र द्वयी गतिर्भवति । ब्रह्मणोऽगुणत्वं न युक्तम् । तद्वचनस्य श्रुतियुक्तिविरोधादित्येकम् । ब्रह्मागुणमिति वचनं न युक्तम् । ब्रह्मणोऽगुणत्वस्य श्रुतियुक्तिविरोधादिति द्वितीयम् । अथवा न तद् युक्तमिति युक्त्युपेतमित्यर्थः । तस्मादनुपादेयमिति फलितम् । तथाचानुमानम्- ब्रह्मणोऽगुणत्वं नोपादेयम् । तस्य श्रुतियुक्तिविरोधादित्यादिकमूह्यं चतुरमतिभिरिति ॥

**युक्त्युपेतमिति सङ्गत्युपेतमित्यर्थकमिति पक्षस्य निरासः**

अत्रोच्यते । प्रथमकल्पे तावद् योगेन युक्तमित्यस्य सङ्गतमित्यर्थमूरीकृत्य न युक्तमित्यस्यासङ्गतमित्यर्थो न्यरूपि । न रूढ्या । अत एव न प्रसिद्धिगोचरोऽयमर्थः । प्रसिद्धिप्रतीपतापात्रमपि । तथा हि प्रयुञ्जते "यद्यपि युक्तोऽयं विषयस्तथापि न सङ्गत" इति । यं विषयं त्वमचकथस्स शोभनस्समीचीनः परं न सङ्गत इति खल्वस्य वाक्यस्यार्थः ।

किञ्च सङ्गत्युपेतमित्यर्थेऽप्रसिद्धेन युक्त्युपेतशब्देन युक्तशब्दव्याख्यानं प्राचीनैरकारीति केषाञ्चित्समाधानं न समाधानकरम् । यो हि युक्तिशब्दस्य योगेन

साङ्गत्यमित्यर्थमवगच्छति स युक्तशब्दस्य सङ्गतमित्यर्थमवगच्छत्येव। यो नावगच्छति तं प्रति तेन शब्देन कृतेऽपि विभजने[१] न स भवति प्रयोजनभाजनम्।

**अयुक्तमित्यसङ्गतार्थकं नेति व्यवस्थापयितुम्**
**अनुव्याख्यानेक्षत्यधिकरणीयपद्मनाभतीर्थटीकासन्दर्भनिरूपणम्**

अपि च श्रीमदाचार्यैरनुव्याख्याने परकृतव्याख्यानस्य क्वचिदयुक्तता भण्यते, क्वचिद्युक्ततायामपि सङ्गतता नास्तीति कथ्यते।

**"न च साङ्ख्यनिराकृत्यै सूत्राण्येतान्यचीक्लृपत्।**
**भगवान् न ह्यशब्दत्वं प्रधानेऽङ्गीकरोत्यसौ ॥ इति**

अत्र श्रीपद्मनाभतीर्थभट्टारकाणां व्याख्यानं सन्यायरत्नावली समस्त्येवम्।

**स.र-** "यदुक्तं कैश्चिदीक्षतेर्नाशब्दमित्यादिश्रुतत्वादित्यन्तसूत्रसन्दर्भेण जगतः प्रधानकारणत्ववादिमतं निराक्रियत इति **तदयुक्तमित्याह न चेत्यादिना**। यदि प्रधानस्य जगत्कारणत्वमत्र निषिध्यते तर्हीक्षतेर्न प्रधानमिति सूत्रं स्यात्, न त्वीक्षतेर्नाशब्दमिति। न ह्यशब्दपदस्य प्रधाने रूढिरस्ति। शब्दरहितत्वयोगश्चेदसिद्धः। साङ्ख्यैस्तदनभ्युपगमात्। नाप्यश्रौतत्वमेवाशब्दपदोक्तम्। प्रधानस्याजामित्यादिना श्रूयमाणत्वेनाश्रौतत्वस्याभावात्। **किञ्च** यावच्छब्दावाच्यत्वं यद्वाचानभ्युदितमिति श्रुतिप्राप्तं न परिह्रियते ब्रह्मणि तावद्वेदानां समन्वयप्रतिज्ञाऽसम्भवदर्थत्वेन निराकाङ्क्षा। अतो ब्रह्मणः शब्दगोचरत्वप्रतिपादनमेवात्र पूर्वाधिकरण**सङ्गतं**, न तु प्रधानस्य जगत्कारणत्वनिषेधः। स च ईक्षतिकर्मव्यपदेशात्स इत्यादौ करिष्यते।" इति।

---

१ व्याख्याने

अत्र प्रधानेऽशब्दत्वकथनमयुक्तं प्रधानस्य जगत्कारणत्वनिषेधो **युक्तोऽप्यसङ्गत** इति कथनेनायुक्तत्वमन्यदसङ्गतत्वमन्यदिति ज्ञायते। तथा चात्र **न तद्युक्तमित्यस्य** यदि निर्गुणत्वं सत्यत्वेऽपि प्रकृतासङ्गतमित्यर्थः स्यात् तदा निमग्नैव नौर्नारालये।

**प्रकरणपर्यालोचनया न युक्तमित्यस्य असङ्गतार्थकत्वस्य असम्भवप्रदर्शनम्**

अपि च प्रकृते **"महद्धि तत् परं ब्रह्म। अशेषगुणसम्पूर्तेः"** इत्याचार्यपादैरुक्ते सति न वयं मन्यामह एतदिति प्रत्यवस्थानं परेषां सङ्गतमेव। असङ्गतं कुतः। प्रादायि चावतरणिका तथैव तैरेव। अतोऽपि न युक्तमित्यस्यासमञ्जसमित्येव समञ्जसम्।

किञ्चासाङ्गत्यप्रदर्शनार्थं पूर्वप्रकृतं निरूप्य तेनेदमसङ्गतमिति कथनीयम्। न तु श्रुतियुक्तिविरोधो वक्तव्यः।

अथ मतम्। श्रुतियुक्तिविरोधादसङ्गतं नामासमञ्जसमित्येवाभिप्राय इति, हन्त तर्ह्यसमञ्जसमित्यशोभनमित्यनर्थान्तरमित्यनर्थान्तरे[१] निपातः।

**असङ्गतमिति अनुचिततात्पर्यकमिति पक्षस्य दूषणम्**

ननु भ्रम एवाभ्रमभवद्भवताम्। यद्दृष्टिधाराक्लिन्ना एवमाक्षिपन्ति। यतो ह्यसङ्गतमित्यस्यानुचितमित्यत्र तात्पर्यमित्यवाच्यत एवास्माभिरिति चेत्। अनुचितमित्यस्य कोऽर्थः। असङ्गतमिति आहोस्विदसमञ्जसमिति। नादिमः। प्रागुक्तदोषपङ्कनिमज्जनात्। तात्पर्यकथनविफलतायाश्च। नान्तिमः। असमञ्जस-मित्यशोभनमित्यनर्थान्तरत्वाद्घट्टकुटीप्रभातं प्रसज्येत। तदेवाङ्ग्यकारि तदेव निराकारीति मा हि भूत्।

---

१ योऽर्थस्तेषामङ्गीकार्यत्वेन नोद्दिष्टस्सोऽनर्थः। तदन्तरे तन्मध्ये निपातस्तस्याङ्गीकार इति यावत्।

### प्रसङ्गादसमञ्जसाशोभनशब्दयोरपर्यायत्वमाक्षिप्य पर्यायत्वसमर्थनम्

अथ मतम्। नेदमनुमतमसमञ्जसमित्यशोभनमिति [१]सहप्रयोगानर्हाविति। असमञ्जसमित्यस्य सम्मत्ययोग्यमित्यर्थः। **"सम्मतमञ्जसा तत्वमत्रे"**ति व्याक्शासीद्भानुजीदीक्षितोऽमरव्याख्यायां रामाश्रमीनाम्न्यां समञ्जसशब्दम्। अशोभनमित्यस्यासुन्दरमित्यर्थः। **"सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्। कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलमि"**त्यमरो यत इति चेत्।

सत्यम्। यद्यपि सुन्दरशब्दपर्यायः शोभनशब्दः साधुशब्दोऽपि। तथापि सौन्दर्यं न लावण्यमात्रम्। **"इच्छा विषयसौन्दर्याधीने"**त्यादिप्रयोगेषु विषय-सामान्यालिङ्गिततया सौन्दर्यं व्यपदिशन्ति यतः। सुन्दरश्शब्दः, साधुश्शब्दः, शोभनश्शब्द इति श्रवणयोग्यः, श्रवणरमणीय इत्यर्थे प्रयुज्यते। सुन्दरं रूपं, साधु रूपं, शोभनं रूपमिति दर्शनयोग्यं चक्षूरमणीयमित्यर्थे प्रयुज्यते। एवं कस्मिंश्चिद्विषये विवादे सतीदं साधु शोभनमित्युक्ते योग्यमङ्गीकारस्येत्यर्थः। असाध्वशोभनमित्युक्तेऽयोग्यमङ्गीकारस्येत्यर्थः। तदिदमैकार्थ्यमागतं सम्मत्य-योग्यार्थ**कासमञ्जसशब्दा**ङ्गीकारायोग्यार्थ**काशोभनशब्द**योरिति सर्वं चतुरस्रम्।

### न तन् मनसि लगति इति विकल्पनिरासः

नापि **"न तद्युक्तमि"**त्यस्य न तन्मनसि लगतीत्यर्थो मनसि लगति। युक्तिर्योगस्सम्बन्धो लगनमित्येव लभ्यते। न तु मनसीति। योग्यतयाऽध्याहार इति न व्याहर्तव्यम्। कृतमध्याहारमध्यविहारेण। न तच्छोभनमित्येव शोभनम्। नासावार्थिकार्थ इति व्यजिज्ञपाम।

---

१ पर्यायौ

### युक्तिरिति वाचोयुक्तिरिति पक्षनिरासः

"युक्तिरिति वाचोयुक्तिः । कयापि वाचोयुक्त्याऽऽगमेन वा तर्केण वा न तत् साधयितुं शक्यमि"ति तृतीयः पक्षोऽपि न कक्षीकरणयोग्यः । अत्रापि वाच इत्यध्याहारहारो गलमलङ्करोति तेषाम् । एतावताप्यनुपादेयमिति परमसाध्याध्याहारस्त्वसाध्यपरिहारः[१] ।

### युक्तिरित्यनुमैवेति पक्षे साध्यपरिष्कारपूर्वकमनुमानं विमृश्य पूज्यपरिमळाचार्याशयस्य निर्दुष्टत्वसमर्थनम् ।

नापि "युक्तिरिति अनुमैव । कथायां श्रुतिरप्यनुमानत्वेनैव ह्युपयुज्यते । इदमित्थं भवितुमर्हति, इदं नेत्थम्, इति श्रुतेरिती"ति चतुर्थः कल्पः कल्पते । कल्पेऽस्मिन् 'श्रुतियुक्त्युपेतं ने'ति साध्यं व्यवरिष्टेष्टस्तद्विनेयः कश्चित्[२] । तथा चागुणत्वं न श्रुतियुक्त्युपेतं श्रुतियुक्तिविरोधादित्यनुमानं पर्यवसायि । न चैतद्युक्तम् । श्रुतियुक्तिविरोधेऽपि प्रबलश्रुतियुक्त्युपेतत्वसम्भवात् । ननु प्रबलतमश्रुतियुक्तिविरोध एवाविवक्षिष्टाऽतः सावकाशत्वादिना दुर्बलश्रुतियुक्त्युपेतत्वेऽपि नेष्टकुड्मलं मायावादिनो विकसतीति फल्यतेऽस्मन्मनोरथद्रुमेणेति चेत् । न । तथा सति प्रबलश्रुतियुक्तिविरोधात् स्वसाधकतोपेतश्रुतियुक्त्युपेतं न भवतीति कथितं स्यात् । प्रत्यक्षस्य च प्रसक्त्यभावादप्रामाणिकत्वमेव साधितं स्यात् । न तु केवलं प्रतिज्ञातं स्यात् । तथा च कथमुत्तरत्र निर्गुणत्वविषये प्रमाणमाशङ्क्य तत्प्रतिविधानं

---

१ तदेतदुभयमुक्तमिव टीकायाम् । प्रतिज्ञाध्याहारप्रसङ्गाच्च इति । न तद्युक्तमिति प्रतिज्ञायां, युक्त्युपेतमिति तद्व्याख्याने च मनसीति वाच इति च, अध्याहारप्रसङ्गादिति ।

२ तथाहि तद्वाक्यम्–"युक्तिरित्यनुमैव । तत्रास्ति कश्चन विशेषः । युक्तिरिति श्रुतिरपि 'पृष्टेनागम एवादौ वक्तव्यः सिद्धये' इति श्रुतिरेव लिङ्गत्वेन वक्तव्यमादौ । नतु श्रुतिव्यतिरिक्तं लिङ्गम् । तेन श्रुतियुक्त्युपेतं नेति साध्यम् । ताभ्यां विरोधादिति हेतुः ।" इति खण्डार्थचन्द्रिकापाश्चात्ये वाके (खं. चं.पा.वाके)-२३१

सङ्गतिपदमधिरोहेत् । यदि केवलं प्रतिज्ञातं स्यात्तदा शङ्कासमाधाने स्यातामेवोपपन्ने इत्यत्र नास्त्युदरदरः[१] ।

अत एवोक्तं राघवेन्द्रश्रीमच्चरणैः " **'न चैको देव'इत्यादिना निर्गुणत्वे पराभिमतप्रमाणस्याशङ्क्यमानत्वात् कथमप्रामाणिकत्वोक्तिरि"**ति[२] । तमेतमविज्ञाय राघवेन्द्रश्रीमच्चरणानामाशयं यत्केनचिदुक्तं[३]"पूर्वपक्षी अज्ञानेन निर्गुणत्वे श्रुतिं प्रदर्शयतीत्येतावन्मात्रेणाप्रामाणिकत्वं न प्रतिज्ञातव्यमिति तु न रोचत इति" तदतिमन्दमतिसाहसञ्च ।

### कथालक्षणादिप्रमाणैः कथायामपि श्रुतेश्श्रुतित्वेनैव प्रमाणतयोपन्याससमर्थनम्

यदत्राभाणि 'श्रुतिरप्यनुमात्वेनैवोपयुज्यत'इति न तत् प्रमाणि। आगम आगमत्वेनैव प्रमाणतां भजते कथायामपि । अत एव **"पृष्टेनागम एवादौ वक्तव्य-स्साध्यसिद्धय"** इति सङ्गच्छते । ननु 'साध्यसिद्धय' इति कथनमेव मथनायतेऽ-भीप्सितस्यागमस्याप्यनुमानत्वरूपामृतस्य सिद्धय इति चेत् । न । साध्यपदस्य प्रतिपाद्यप्रमेयपरत्वात् । ब्रह्म जगत्कारणं 'स इदं सर्वमसृजते'ति श्रुतेरिति पञ्चमीप्रयोगेण श्रुतेरनुमात्वमिति त्वतिमन्दम्[४] ।

---

१ संशयभयम् ।

२ स्वसाधकतोपेतश्रुतियुक्त्युपेतं नेत्यनेनाचार्यैः, निर्गुणत्वविषये परेणाशङ्क्यमानानां प्रमाणानां दौर्बल्ये साधिते सति न केवलं निर्गुणत्वविषये श्रुत्युपन्यासेन पूर्वपक्षी कृती स्यात् । किन्तु श्रुतेः साधकत्वोपयुक्तप्राबल्यं साधनीयम् । न च तदुत्तरत्र दृश्यत इति भावः ।

३ 'अपिच पूर्वपक्षी अज्ञानेन निर्गुणत्वे श्रुतिं प्रदर्शयतीत्येतावन्मात्रेणाप्रामाणिकत्वं न प्रतिज्ञातव्यमिति तु न रोचत इति' खं.चं.पा.वाके-२३२

४ अयं भावः । श्रुतिरप्यनुमात्वेन प्रयुज्यत इत्यस्य 'श्रुतेरनुमात्वेनैव प्रामाण्यम्, नागमत्वेन'इत्यर्थस्तु सर्वथा न सम्भवति । बहुप्रमाणविरोधात् वैशेषिकमतप्रवेशापत्तेश्च ।

नन्वत एवोक्तं कथायां(वादप्रक्रियायां) इति । तथाहि- तत्र "पृष्टेनागम एवादौ वक्तव्य-स्साध्यसिद्धय"इति कथालक्षणे स्वाभिमतसाध्यसिद्धय आगम एवादौ वक्तव्य इत्युक्तम् । 'ब्रह्म

जगत्कारणमि'ति वादिनोक्ते, कुत इति प्रतिवादिना पृष्टे, स्वाभिमतसाध्यसिद्धये वादिना 'स इदं सर्वमसृजतेतिश्रुतेरि'त्येव प्रयुज्यते। तथा च परार्थानुमाने 'पर्वतो वह्निमानि'ति प्रतिज्ञातार्थे पर्वतवह्निसम्बन्धे, 'धूमादिति' पञ्चम्यन्तहेतुवाक्येन यथा धूमस्य लिङ्गत्वेन (अनुमात्वेन,युक्तित्वेन) समर्पणम्, एवं 'ब्रह्म जगत्कारणमि'ति प्रतिज्ञातार्थे 'स इदं सर्वमसृजतेतिश्रुतेरि'तिपञ्चम्यन्तहेतुवाक्येन श्रुतेरपि लिङ्गत्वेन (अनुमात्वेन) समर्पणमिति तस्यापि वादप्रक्रियायामस्त्यनुमात्वमित्यर्थ इति चेत्।

अत्र पृच्छामः। किं "पृष्टेनागम एवादौ वक्तव्यस्साध्यसिद्धय" इति कथालक्षणे साध्यसिद्धय इति कथनात्, साध्यपदस्य चानुमेयपरत्वात्तत्साधनाय प्रयुक्तस्यागमस्याप्यनुमात्वमित्यभिप्रायः, किंवा 'पञ्चम्यन्तं लिङ्गप्रतिपादकं हेतुरि'ति वचनात्, श्रुतेरितिपञ्चम्यन्तपदप्रयोगेण हेतुवाक्यत्वात् तदर्पितस्यागमस्यानुमात्वमिति। नाद्यः। तत्र साध्यपदस्य प्रतिपाद्यप्रमेयपरत्वेनाभिप्रेतार्थसाधकत्वात्। तदेतत् कथालक्षणभावमाकलयतां स्फुटमेवेति न विशद्यते।

द्वितीयेऽपि श्रुतेरितिपञ्चम्यन्तपदार्पितत्वादागमस्यानुमात्वम्, उत हेतुवाक्यार्पितत्वात्। नाद्यः। कुतो(कस्मात्)घटो जायत इत्यत्रोत्तरतयोक्त'दण्डादि'तिपञ्चम्यन्तपदार्पितस्य दण्डस्याप्यनुमात्वापत्तेः। द्वितीये पृच्छामः। कथमवगतं श्रुतेरित्यस्य हेतुवाक्यत्वमिति। पञ्चम्यन्तत्वादिति तु पूर्वोक्तरीत्या व्यभिचारि। लिङ्गार्पकत्वादिति त्वन्योन्याश्रयग्रस्तम्। अस्य हेतुवाक्यत्वे सिद्धे तदर्पितस्यागमस्यानुमात्वम् (लिङ्गत्वम्), आगमस्य चानुमात्वे सिद्धे तदर्पकस्यास्य हेतुवाक्यत्वमिति। धूमस्य च व्याप्यत्वेन लिङ्गत्वं सिद्धमिति तदर्पकस्य धूमादित्यस्य हेतुवाक्यत्वम्। अत एव व्याप्तिबोधनायोदाहरणवाक्यमुच्यते प्रयोक्राऽनुपदम्।

किञ्च धूमादित्युक्ते कथं धूमस्य साधकत्वं प्रत्यक्षत्वागमत्वयोरभावादिति भावेन पृष्टे प्रत्यक्षत्वागमत्वयोरभावेऽपि व्याप्यत्वेन(लिङ्गत्वेन,अनुमात्वेन) तस्य साधकतेति ग्राहयितुं व्याप्तिप्रदर्शकमुदाहरणवाक्यं यथा प्रयुज्यते, एवं यद्यागमस्याप्यनुमात्वेन साधकत्वमभिमतं स्यात्तदा कथं श्रुतेस्साधकत्वमिति प्रतिवादिना प्रष्टव्यम्, वादिना च व्याप्तिप्रदर्शकमुदाहरणवाक्यं वक्तव्यम्। परन्तु न तथा पृच्छति प्रतिवादी, न वा तथोत्तरयति वादी। उभयोरप्यागमत्वेनैव श्रुतेस्साधकत्वमित्यस्य सम्मतत्वात्।

किञ्च वादिना स्वाभिमतप्रमेयसिद्धय आगम उक्तः। तदा प्रतिवादिना किं कार्यमिति शङ्कायामुक्तमाचार्यैः "अन्यार्थ एवागमस्य वक्तव्यः प्रतिवादिना" इति। तदनेनावगम्यत 'आगमस्यागमत्वेनैव साधकतामभ्युपगम्य वादिप्रतिवादिनोः प्रवृत्तिरिति।

किञ्च व्याप्त्या स्वसाध्यसाधकं लिङ्गम्, शक्त्यादिनाऽर्थप्रतिपादक आगमः, तत्र यथा स्वसाध्ये लिङ्गात्मकस्य धूमस्य प्रत्यक्षत्वागमत्वयोरसम्भवः, एवमागमात्मिकायाश्श्रुतेरपि स्वप्रतिपाद्ये प्रत्यक्षत्वानुमात्वयोरसम्भव एव।

किञ्च पर्वतो वह्निमानिति प्रतिज्ञातार्थे धूमादितिवाक्येन धूमो लिङ्गत्वेन समर्प्यते, तत्रैवाप्तवाक्यादित्युक्त आप्तवाक्यत्वेनैवाप्तवाक्यं समर्प्यते न लिङ्गत्वेन, तत्रैव प्रत्यक्षादित्युक्ते

प्रत्यक्षत्वेन प्रत्यक्षं समर्प्यते न लिङ्गत्वेन, एवं ब्रह्म जगत्कारणमिति प्रतिज्ञातार्थे श्रुतेरित्यनेन श्रुतित्वेनैव श्रुतिस्समर्प्यते न सर्वथा लिङ्गत्वेनेति सर्वानुभवसिद्धम्।

वस्तुतस्तु धूमादित्यनेनापि धूमः प्रमाणत्वेन समर्प्यते न तु लिङ्गत्वेन। प्रतिज्ञातार्थे प्रमाणजिज्ञासया हि,'कुत'इति पृष्टम्। अतः प्रश्नसामानाधिकरण्याय पञ्चम्यन्तप्रयोगेण धूमादित्यादिनोत्तरं प्रमाणमेवोच्यते। तस्य च प्रामाण्यं लिङ्गत्वेनेति तु तत्तत्पदार्थस्वरूपनिबन्धनम्। न तु वाक्याधीनम्। एवमाप्तवाक्यादिति, प्रत्यक्षादिति, श्रुतेरिति वा पञ्चम्यन्तप्रयोगेणाप्तवाक्यादिकं प्रमाणत्वेनैव समर्प्यते न तु लिङ्गत्वेन, तस्य च प्रामाण्यमागमत्वेन,प्रत्यक्षत्वेनेत्यादि तु तत्तत्पदार्थस्वरूपनिबन्धनम्, न वाक्याधीनमिति।

किञ्च कथमत्र श्रुतिर्ब्रह्मणो जगत्कारणत्वे युक्तित्वेन प्रमाणतयोपन्यस्यते? श्रुतेर्ब्रह्मजगत्कारणत्व-व्याप्यत्वाभावात्। ननु 'यत् श्रुत्युक्तं तत्सत्' इति व्याप्तिरस्तीति चेत्। किं तया प्रकृतानुपयुक्तया। नह्यनया श्रुतेर्ब्रह्मजगत्कारणत्वव्याप्यत्वं सिद्ध्यतीति यत्किञ्चिदेतत्।

किञ्चास्तु वा ज्ञातताया ज्ञानरूपत्वमिव श्रुतत्वस्यापि श्रुतिरूपत्वम्। तेन स्वप्रतिपाद्यार्थ-सत्यत्वाङ्गीकार्यत्वादौ श्रुतत्वस्य युक्तित्वेन प्रामाण्येऽपि स्वप्रतिपाद्यार्थे तु श्रुतेर्युक्तित्वेन प्रामाण्यं नैव सम्भवतीत्यावेदितमेव।

किञ्च यदाचार्यवचनं श्रुतेर्युक्तिरूपत्वे प्रमाणतयोपन्यस्तं,"पृष्टेनागम एवादौ वक्तव्यः साध्यसिद्धये"। इति, तत्रैव, एवकारेण प्रथमं युक्त्युपन्यासो न कर्तव्य इत्यभिधाय, उत्तरार्धे तत्र प्रमाणमुच्यते "नैषा तर्केणापनेया मतिरित्याह हि श्रुतिरि"ति। यद्यत्रागमस्य युक्तित्वेनैव प्रामाण्यं न त्वागमत्वेनेत्यभिमतं स्यात्तर्ह्याचार्याणां स्ववचनव्याघातस्स्यात्। 'स्वयमेव प्रथमं युक्तिर्न वक्तव्येत्युक्त्वाऽऽगमो युक्तित्वेन वक्तव्य इत्याहे'ति। आगमरूपा युक्तिरेव वक्तव्या न तदतिरिक्ता इतित्वागमस्य युक्तित्वसिद्ध्युत्तरकालीनमिति नात्रावकाशमर्हति।

किञ्च ब्रह्म जगत्कारणं स इदं सर्वमसृजतेतिश्रुतेरिति वादिना प्रयुक्ते युक्तावाग्रहवान् प्रतिवादी वदति, ननु भो जानामि श्रुतिं, युक्तिरुच्यतामिति। यद्यत्र श्रुतिश्श्रुतित्वेन न प्रमाणतयोपन्यस्ता किन्तु युक्तित्वेन तदा प्रतिवादिवचनस्यासङ्गतत्वापत्तिः। तदुत्तरतया च वादी 'कार्यत्वादि' युक्तित्वेन न ब्रूयात्। युक्तिरेवोक्तेति च ब्रूयात्। न तथा ब्रवीति, ब्रवीति च कार्यत्वादियुक्तिम्। तेनावगम्यते वादिना न श्रुतिर्युक्तित्वेन प्रयुक्ता, न वा प्रतिवादिना युक्तित्वेन गृहीतेति।

किञ्च वादिना श्रुतिर्यद्यनुमात्वेन प्रयुक्ता तर्हि प्रतिवादिनो, धूमाद्वह्निमनुमिनोमीतिवत्, आगमाद्ब्रह्मणो जगत्कारणत्वमनुमिनोमीत्यनुव्यवसायस्स्यादित्याद्यनेकदोषभूषितत्वात्, श्रुतित्वेनैव श्रुतेः प्रमाण-तयोपन्यासात् सर्वथा युक्तित्वप्रसक्त्यभावाद्युक्तिशब्देन श्रुतिरपि गृह्यत इत्यसम्भवदुक्तिकमित्यलमिति।

**अनुव्याख्यानादिदिशाऽऽगमस्यागमत्वेनैव प्रामाण्यं न तु लिङ्गत्वेनेति प्रतिपादनम्**

किञ्चानुव्याख्याने **"प्रारम्भाद्याश्च युक्तयः। आगमार्थावसित्यर्था नियत-व्याप्तयोऽखिला"** इत्युक्त्वा **"वाक्यं प्रकरणं स्थानं समाख्या च तथाविधा"** इत्यवोचन्भगवत्पादाचार्याः। प्रमाणलक्षणे च **"समाख्यावाक्यप्रकरणस्थानानि चोपपत्ति(लिङ्ग–पा)विशेषाः"** इति। अत्रोभयत्रापि श्रुतेरग्रहणात् श्रुतेश्श्रुतित्वेनैव निर्णायकत्वं, न तु लिङ्गत्वेनेति सिद्ध्यति। अत एवोक्तं वामनाधिकरणचन्द्रिकायाम्। **"अत्र श्रुतिः स्वनिर्णये श्रुतित्वेनैव निर्णायिका। वाक्यादि तु अनुमानत्वेन।** अत एव "वाक्यं प्रकरणं स्थानं समाख्या च तथाविधा" इत्यनुव्याख्याने "समाख्या-वाक्यप्रकरणस्थानानि चोपपत्तिविशेषा" इति प्रमाणलक्षणे च वाक्यादीनामेव लिङ्गतोक्ता। न तु श्रुतेः। लिङ्गस्य त्वनुमानत्वमविप्रतिपन्नमिति न लिङ्गं तत्रोक्तमि"ति।

यद्यप्यत्र श्रुतिरिति वाचकश्शब्द एव विवक्ष्यते। तथापि [१]तुल्यन्यायेना-गमस्याप्यागमत्वेनैव निर्णायकत्वं न तु लिङ्गत्वेनेति समसैत्सीत्।

उपक्रमादीनां विप्रतिपन्नार्थे लिङ्गत्वेऽपि स्वार्थे त्वागमत्वमेवेत्यन्यदेतत्।

न चात्राप्युपक्रमादिरूपा विप्रतिपन्नार्थे लिङ्गरूपा एवागमा युक्तिपदेन प्रतिपाद्यन्त इति वाच्यम्। तदतिरिक्तानां साक्षादगुणत्वप्रतिपादकानामागमाना-मनिषेधप्रसङ्गकृत्याऽऽस्कन्देत।[२]

---

१ अयं भावः। वाचकशब्दरूपायाश्श्रुतेश्श्रुतित्वेनैव निर्णायकत्वं न तु लिङ्गत्वेनेति। 'शब्दादेव प्रमित'इति सूत्र ईशानो विष्णुर्वामनशब्दादितिपञ्चम्यन्तपदसमर्पितस्यापि वामनशब्दस्य श्रुतित्वेनैव (वाचकत्वेनैव) निर्णायकत्वं, न तु लिङ्गत्वेनेत्यभिहितम्। तत्समानन्यायाद्'ब्रह्म जगत्कारणं स इदं सर्वमसृजतेतिश्रुतेरि'ति पञ्चम्यन्तपदसमर्पितस्याप्यागमस्यागमत्वेनैव निर्णायकत्वम् न त्वनुमात्वेनेत्यवधेयमिति।

२ अयं भावः। तन् न युक्तमित्युक्ते, युक्तमित्यस्य युक्त्युपेतमिति व्याख्याने युक्तिशब्देन युक्तित्वोपेत-

एतेन"**श्रुतिलिङ्गवाक्यानां साक्षाद्विप्रतिपन्नार्थनिष्ठत्वे श्रुत्यादित्वेनैव ज्ञापकत्वम्। उपक्रमोपसंहारयोःश्रुतत्वे तन्निश्चायकतया लिङ्गत्वम्, अन्यत्र चेत्प्रकरणनिश्चायकत्वेने**"ति वामनाधिकरणीयायां तत्त्वप्रकाशिकायां श्रुतेरप्युपक्रमोपसंहारयोश्श्रुतत्व उपक्रमादिनिश्चायकतया लिङ्गत्वं स्वीकृतमतो युक्तमुक्तं युक्तिशब्देन श्रुतिरपि गृहीते'ति निरस्तम्। साक्षाद्विप्रतिपन्नार्थनिष्ठायाश्श्रुतित्वेनैव निर्णायिकाया अनिषेधप्रसङ्गात्।

**प्रतिज्ञाध्याहारप्रसङ्गादित्यत्र प्रतिज्ञापदप्रयोगमर्मप्रकाशनपूर्वकं 'न तद्युक्तं श्रुतियुक्तिविरोधादि'त्यत्र टीकाया अकलङ्कित्वप्रदर्शनम्**

अस्तु वा कथञ्चिद् युक्तिशब्दश्श्रुतियुक्त्युभयपर इति तथापि ततः किमित्यनुयोगे नोपादेयमिति परमसाध्यमध्याहार्यमेव। तदिदं दूषणमुदजीघटन्नेव टीकाकृत्पादा "**प्रतिज्ञाध्याहारप्रसङ्गाच्चे**"ति।

यदत्रोक्तं केनचित्[१] "प्रतिज्ञैकदेशे साध्ये प्रतिज्ञाशब्दप्रयोक्तारं श्रीजयतीर्थमुनिमेवास्कन्दते स्वायत्ते शब्दप्रयोगे इति दोष" इति। तन्न। भावानवबोधात्। तथाह्यत्रावहितमनोभिरिदं ध्यायेत। **'न तद् युक्तं श्रुतियुक्तिविरोधाद्'** इति मूलवाक्यमस्ति। अत्रैवं योजना कार्या तैः। यतो न तद्युक्तमतो न तद् विद्यत

---

श्रुतिरपि गृह्यते चेदप्येवं साधितं भवति। ब्रह्मणोऽगुणत्वम् अगुणत्वे श्रुत्यन्तरस्य तात्पर्यनिर्णायकोपक्रमादिरूपश्रुत्युपेतं साक्षात्स्वसाधकयुक्त्युपेतं च न भवति, श्रुतियुक्तिविरोधादिति। तथा च साक्षादगुणत्वाप्रतिपादकानाम् उपक्रमादिलिङ्गरूपत्वेन केवलं तात्पर्यनिर्णायकानामागमानां निषेधेऽपि साक्षादगुणत्वप्रतिपादकानां **निष्कलं निष्क्रियं, केवलो निर्गुणश्चे**त्यादीनामागमानामनिषेधप्रसङ्गात्। तथा च सर्वथाऽप्रामाणिकत्वस्याप्यप्रतिज्ञातत्वप्रसङ्गः। तथा चासाधितेनाप्रामाणिकत्वेन कथमनुपादेयत्वसाधनं सम्भवतीत्यालोच्यं चतुरमतिभिरिति।

१ 'तेन स्वायत्ते शब्दप्रयोगे इति दोषोऽपि नास्मान् स्पृशति। अपि तु प्रतिज्ञैकदेशे साध्ये प्रतिज्ञाशब्दप्रयोक्तारं श्रीजयतीर्थमुनिमेवास्कन्दतेऽयं दोषः।' स्वं.चं.पा.वाके-२३१

इति, अथवाऽसमञ्जसमिति, अथवाऽनुपादेयमिति । अत्र यद्यपि तदिति धर्मिवाचकं पदं जागर्ति । अतो न विद्यत इत्यादिसाध्यपदमेवाध्याह्रियेत । तथाप्यध्याहृत-साध्यपदार्थेनान्वयार्थं तदित्यस्यावृत्तिः कार्या । तथा च न केवलं साध्यपदाध्याहारो विधीयेत किन्तु तदित्यावर्त्येतापीति सूचयितुकामाश्श्रीमज्जयतीर्थगुरुसार्वभौमाः प्रायुञ्जत सार्थकं लाक्षणिकं प्रतिज्ञापदमिति नः प्रतिज्ञापदम् । तत्प्रत्तप्रेक्षः प्राज्ञः प्रजानाति, "यदि केवलं साध्यपदाध्याहारोऽविवक्षिष्यत[१] तर्हि तथैव प्रायोक्ष्यत न प्रायोजि तथा । प्रायुज्यत च प्रतिज्ञापदम् । तेनेदं सिध्यति, यत्कृतेऽपि साध्यपदाध्याहारे यथा प्रतिज्ञारूपता स्यात् तथा तच्छब्दस्यावर्तनेनान्वयो विधीयेतेति" ।

ननु न तच्छब्दस्यावृत्तिः कर्तव्या । तद्यतो न युक्तमतोऽनुपादेयमिति सकृत्प्रयुक्तस्यैवान्वयसम्भवादिति चेत् । न । लिङ्गपक्षसम्बन्धबोधनाय प्रयुक्त-स्तच्छब्दस्साध्यपक्षसम्बन्धबोधनाय पुनरावर्तनीय एव । भिन्नदेशयोरपि व्याप्य-व्यापकभावस्य लिङ्गलिङ्गिभावस्य चाङ्गीकारिणां मते प्रकृते समानदेशत्वान्तर्भावेन व्याप्यव्यापकभावो लिङ्गलिङ्गिभावश्च विवक्षागोचर इति प्रदर्शनार्थं सुतरामावर्तनमनिवर्तनम्[२] ।

तथा च युक्तमित्यस्य युक्त्युपेतमिति व्याख्याने टीकाप्रदर्शितक्लेशानां[३]

---

१ वच-परिभाषणे इत्यस्मात् सन्नन्तात् कर्मणि लृङ् ।

२ अत्र केचिट्टीकानुयायिनः- यतो न तद्युक्तमतोऽनुपादेयमिति योजना ह्यत्र विवक्षणीया । तथात्वे तु, प्रतिज्ञायां- "न तद्युक्तमिति" प्रतिज्ञात्वेन सम्मतायाम्, तदनुपादेयमिति प्रतिज्ञान्तरविवक्षया हेतुरूपत्वसम्पादनार्थं यत इति अध्याहारप्रसङ्गाच्च इत्यर्थे तु मुख्यार्थस्यैव प्रतिज्ञाशब्दस्य स्वीकार्यत्वादिति, अथवा प्रतिज्ञायामध्याहारः प्रतिज्ञाध्याहारः । प्रतिज्ञायां- प्रतिज्ञात्वेन कल्पनीयायां धर्मिवाचकशब्दो जागर्ति । साध्यपदस्याध्याहारः कर्तव्य इति लभ्यते । तेन न लक्षणेति च वदन्ति ।

३ क्लेशस्यात्मधर्मत्वेऽप्यर्थधर्मत्वेन व्यवहारस्तु, आत्मधर्मभूताया आकाङ्क्षायाः पदमाकाङ्क्षत इति पदधर्मत्वव्यवहारवदवगन्तव्यः ।

सर्वथाऽपरिहारात्परिहारभ्रान्त्या [१]**प्राचीनानां विमर्शपरा टीका पूर्वाग्रहपूरितेति** कथनं टीकाभावानवबोधनिबन्धनमित्यवधेयं सूरिभिरित्यलम् ॥

॥ इति युक्त्युपेतविमर्शः ॥



१ तस्मादिदमसदिति वचनस्य पूर्वाग्रहादन्यत् कारणं नोत्पश्यामः । खं.चं.-७३

# अथ बुद्धिपूर्वविमर्शः

**कर्मनिर्णयः :– युक्तिश्च । बुद्धिपूर्वं सर्वकर्तृत्वात् सर्वज्ञत्वादयो गुणा युक्ताः । 'कर्तृत्वात्सगुणं ब्रह्म पुरुषं पुरुषर्षभम्'इति भागवते ॥**

**कर्मनिर्णयटीका** :– इदानीं ब्रह्मणस्सगुणत्वे युक्तिं चाह– **युक्तिश्चेति** । अनेन सार्वज्ञादिगुणोपेतं बुद्धिपूर्वं सर्वकर्तृत्वात् । न यदेवं न तदेवं यथा यज्ञदत्त इति केवलव्यतिरेक्यनुमानमुक्तमिति व्याचक्षते । तत्तु न बुध्यामहे । अप्रसिद्ध-विशेषणत्वात् । तददूषणत्वेऽपि बुद्धिपूर्वमिति विशेषणस्य व्यर्थत्वात् । अदृष्टद्वारा कर्तृषु जीवेषु व्यभिचारस्य सर्वग्रहणेनैव परिहृतत्वात् । सम्भूतेषु व्यभिचारस्या-नाशङ्कनीयत्वात् । कालादिव्यवच्छेदार्थं बुद्धिपूर्वमिति विशेषणमिति चेत् । न । तस्य कर्तृग्रहणेनैव निरस्तत्वात् । बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमित्युक्तत्वात् । अत एव चादृष्टद्वारा कारणेषु जीवात्मसु न प्रसङ्गः । कारणत्वमिह कर्तृत्वं विवक्षितम् । ततः कालादौ प्रसङ्गः । तन्निवृत्तये बुद्धिपूर्वमिति विशेषणमिति चेत् । न । वाचकग्रहणेनैवाप्रसङ्गे गौणं प्रयुज्य व्यभिचारपरिहाराय विशेषणपूरणे प्रयतमानस्या-कुशलत्वप्रसङ्गात् । स्वरूपासिद्धिश्च कथं परिहरणीया? यो हि ब्रह्म निर्गुणं मन्यते स कथं तस्य बुद्धिपूर्वं सर्वकारणत्वं मन्येत ? "स तपस्तप्त्वा इदं सर्वमसृजत" इत्यादिश्रुत्या हेतुसिद्धिरिति चेत्, तर्हि हेतुसिद्धावेव सगुणत्वसिद्धेरनुमेयाभावः । सार्वज्ञादिसिद्ध्यर्थमनुमानमिति चेत् । न । तस्याप्रसक्तत्वात् । सर्वकर्तृत्वशब्दार्थान्त-र्गतत्वेन साध्याविशिष्टत्वदोषाच्चेति ।

तर्हि कथमेतत् ? इत्थम् । क्षित्यादिकं सकर्तृकं कार्यत्वाद्धटवदिति युक्तिश्च ब्रह्मणस्सगुणत्वेऽस्तीति प्रथमवाक्यार्थः । तत्राशङ्का– नन्वनेन प्रसिद्धकर्तृनिरपेक्षो-त्पत्तिकस्य क्षित्यादेस्सकर्तृकत्वं सिध्यति न तु ब्रह्मणस्सगुणत्वमिति ।

तत्राह- **बुद्धिपूर्वमिति**। यया युक्त्या सर्वस्य जगतः कर्ता सिद्धस्तस्य सर्वज्ञत्वादयो युक्तास्तयैव युक्त्या सिद्धाः। कुतः? सर्वकर्तृत्वात्। सर्वकर्तृत्वान्तर्गतत्वात्तेषाम्। कथम् ? बुद्धिपूर्वं हि कर्तृत्वं भवतीति।

एतदुक्तं भवति। सर्वस्य कर्ता तावदनुमानेन सिद्धः। तस्य चैकत्वं प्रथमप्राप्तत्वात्कल्पनालाघवादनेकत्वे प्रमाणाभावाच्चाङ्गीकार्यम्। स च ब्रह्मैव। "यतो वा इमानि भूतानि जायन्ते" इत्यादिश्रुतेः। अन्यत्रासम्भवाच्च। कर्तृत्वं च कार्यकारकक्रियाफलाभिज्ञानतदिच्छाप्रयत्नपूर्वकः स्पन्दः। ततः सर्वकर्तेत्युक्ते सर्वज्ञस्सत्यकामस्सत्यसङ्कल्पस्समस्तशक्तिसमन्वित एवोक्तो भवतीति कथं नानेन ब्रह्मणस्सगुणत्वसिद्धिरिति। अत्रैव पुराणसम्मतिमाह- **कर्तृत्वादिति**। कर्तृत्वेन सगुणत्वलाभादित्यर्थः। न केवलं सगुणं किन्तु ब्रह्म पूर्णम्। पुरुषमिति भगवतो नाम सङ्कीर्तनम्। पुरुषत्वोक्त्याऽस्मदादिसालक्षण्यं प्राप्तम्। तत्परिहारायोक्तम्- **पुरुषर्षभमिति**। तदुपपादनाय कर्तृत्वात् सगुणं ब्रह्मेति। स सङ्गत्येति द्वितीयान्वयः॥

## कर्मविजयः

### आधिक्यग्रस्तत्वप्रायपाठपर्यालोचनाभ्यां प्रतनव्याख्याने श्रुतमूलवाक्यस्य अन्यथाविन्यासापत्त्युद्भावनम्

प्रतने प्रथने[१]"ब्रह्म सार्वज्ञादिगुणोपेतं बुद्धिपूर्वं सर्वकर्तृत्वादि"त्यनुमानं विवक्षाविषयः। अस्मिन् पक्षे "युक्तिश्चे"त्यस्य मौलवाक्यस्यानन्तरं "बुद्धिपूर्वं सर्वकर्तृत्वमि"ति वाचोयुक्तिर्युक्ततरा प्रथमान्तान्वयस्वारस्यात्। न तु बुद्धिपूर्वं सर्वकर्तृत्वादिति। हेतुश्चेति कथने तत्सङ्गच्छते स्म[२]।

---

१ प्राचीनटीकायामित्यर्थः।

२ पञ्चम्यन्तं लिङ्गवचनं हेतुरिति हेतुलक्षणाभिधानात्।

किञ्चास्मिन्पक्षे "युक्ता" इत्यधिकम्। "युक्तिश्च बुद्धिपूर्वं सर्वकर्तृत्वं सर्वज्ञत्वादिषु गुणेष्वि"त्येव पर्याप्ततां भजते हि। तद्यथा न पर्वतोऽग्निमानित्याह कश्चन। तं प्रति, न तद्युक्तं युक्तिविरोधात्। युक्तिश्च धूमवत्त्वमित्येव वक्तव्यं न तु धूमवत्त्वात् **पर्वतेऽग्निर्युक्त** इति।

युक्ता युक्तिसिद्धत्वेन प्रतिज्ञातास्सर्वज्ञत्वादयो धर्मा बुद्धिपूर्वं सर्वकर्तृत्वादिति हेतुना सिद्धा भवन्तीति कथञ्चिन्मूलयोजनासम्भवेऽपि **युक्ता** इति विशेषणं न प्रयोजनभागिति तु निष्टङ्कितम्।

अपि च पूर्वं **"तथाहि श्रुतिरि"**ति प्रतिज्ञाय **"सत्यं ज्ञानम्...इत्यादिके"**त्येव वाक्यसरणिर्दृष्टिसरणिमेति। न तु "इति श्रुता गुणा" इति श्रुतम्। तत्प्रायपाठादपि युक्ता इति पदं पदं[१] न प्रपद्यतेऽत्र।

टीकाकृतां पक्षे वाक्ययोजनादिप्रकारस्तु परिशिष्टे द्रष्टव्यः।

**सिद्धान्तेऽदूषणस्याप्यप्रसिद्धविशेषणत्वस्यासिद्धिसङ्कीर्णतादशायां दोषत्वोपपत्तिरिति उपपादनपूर्वकं प्रकृते तदुद्भावनाभिसन्ध्युद्घाटनम्**

अथ भावयामः क्लेशानर्थसंस्पृष्टान् यानुदभावयन्त श्रीमट्टीकाकृत्पादाः प्राचीनयोजनायाम्।

ब्रह्म सार्वज्ञादिगुणोपेतं बुद्धिपूर्वं सर्वकर्तृत्वात्। न यदेवं न तदेवं यथा यज्ञदत्त इति केवलव्यतिरेक्यनुमानमत्र विवक्षितमिति प्राचीनाः। अप्रसिद्ध-विशेषणत्वमिति टीकाकृत्पादाः।

नन्वप्रसिद्धविशेषणत्वं न सिद्धान्ते दूषणम्। **"आश्रयव्याश्रयासिद्धी साध्यासिद्धिश्च दूषणम्। केषाञ्चिन्न च ते दोषा व्याप्तौ सत्यां कथञ्चने"**ति भक्तिपादीयानुव्याख्यानोक्तेरिति चेत्।

---

१ नावकाशं लभत इत्यर्थः।

सत्यम्। तथाप्यस्त्यत्र विशेषः। अप्रसिद्धविशेषणत्वस्य दूषणत्वं नास्तीति कथयन्तश्चतुर्धा विकल्प्य "साध्यविशेषणाप्रसिद्धौ तेन साधनस्य व्याप्तिप्रतीत्यनुपपत्तिप्रसङ्गादि"ति तृतीयं विकल्पं **"व्याप्तिश्च व्यतिरेकेण तत्र तैश्चावगम्यत"** इत्यनुव्याख्यानेन निराकृषताचार्यपादाः। तदिदं सुधायामेवं व्याख्यायि। जीवच्छरीरं सात्मकं प्राणादिमत्त्वाद्, भूरितरेभ्यो भिद्यते गन्धवत्त्वाद्, ईश्वरः सर्वज्ञः सर्वकर्तृत्वादित्याद्यनुमानेषु पक्षादिप्रविभागात्प्राक् पक्ष एवावगता व्याप्तिस्तत्रैव विप्रतिपत्त्योपदर्शयितुमशक्या व्यतिरेकेणोपपाद्यत इति[1]। उदाहरणत्रयेऽपि पक्षेषु लिङ्गान्युभयवादिसिद्धानि। अन्यथा तत एवानुमानं दुष्टत्वं लभते। **"तदन्यस्य सिद्धतैव हि साधिका"** इत्यनुव्याख्यानोक्तेः। केवलव्यतिरेकिस्थले पक्षादन्यत्र साध्यस्य प्रसिद्धिदुर्विधत्वात्[2] 'प्राणादिमत्त्वं सात्मकत्वेन व्याप्तं','गन्ध इतरभेदव्याप्तः','सर्वकर्तृत्वं सर्वज्ञत्वेन व्याप्तं' तदभावव्यापकाभावप्रतियोगित्वादिति व्यतिरेकव्याप्त्याऽन्वयव्याप्तिसाधनेऽपि साऽन्वयव्याप्तिः पक्षान्तर्भावेनैव सिद्ध्यति गत्यन्तराभावात्। अविनाभावस्यैव व्याप्तित्वेऽपि यत्र समानदेशत्वान्तर्भावेणैवाविनाभावस्तत्र यत्किञ्चिदेकाधिकरणान्तर्भावेनैव व्याप्तेरवगन्तव्यत्वात्तस्य च पक्षातिरिक्तस्य प्रकृतेऽभावात्। तत्र चेद्धेतुर्न सम्मतः प्रतिवादिनस्तर्हि नानेनानुमानेनापि व्याप्तिस्तं प्रति सिद्ध्यति। **"व्याप्तिश्च व्यतिरेकेण तत्र तैश्चावगम्यत"** इति व्याप्तिप्रतीत्यनुपपत्त्यभावादप्रसिद्धविशेषणत्वं न दूषणपदवीमधितिष्ठतीत्यनुव्याख्युराचार्याः।

---

१ अत्र यादुपत्यम्- स्वशरीरे प्रत्यक्षेणान्यत्र चोपदेशादिनाऽवगतसात्मकत्वेन पुंसा भूयोदर्शनादिना धूमाग्न्योरिव प्राणादिमत्त्वसात्मकत्वयोरपि जीवच्छरीरेष्ववगताऽपि व्याप्तिस्सात्मकत्वे विप्रतिपन्नं परं प्रति नोपदर्शयितुं शक्येत्यर्थः।

२ प्रसिद्धिदारिद्र्यादित्यर्थः।

यद्यन्यतरासिद्धिसाङ्कर्यादप्रसिद्धविशेषणत्वे व्याप्तिप्रतीत्यसम्भवस्तर्हि तस्य दोषत्वमेवेति हार्दम् । दोषान्तरासङ्कीर्णस्याप्रसिद्धविशेषणत्वस्यादूषणत्वाददूषणत्व-वादः । प्रकृते च निर्गुणत्ववादिनः प्रतिवादित्वादन्यतरासिद्धिसत्त्वादप्रसिद्ध-विशेषणत्वे व्याप्तिप्रतीत्यसम्भवात् तस्य दूषणत्वमेव ।

एतेनाप्रसिद्धविशेषणत्वं दूषणत्वेनोक्त्वा **"तददूषणत्वेऽपी"**त्यादिनोत्तरत्र दोषान्तरकथनापेक्षयाऽनुक्त्वैवाप्रसिद्धविशेषणत्वं विशेषणवैयर्थ्यादिदोषकथनं ज्यायः **प्रक्षालनादितिन्यायादि**ति निरस्तम् ।

प्रकृते तस्य दूषणत्वे, तददूषणत्वेऽपीति कथमचकथँष्टीकाकारा इति चेदभ्युपेत्यवादेनेति गृहाण ।

असिद्धिसाङ्कर्यादस्य दोषत्वेऽसिद्धिरेवोद्भाव्यतां किमनेनेति मा शङ्किष्ठाः । उदभाव्येव साप्युपरिष्टात् । कृतं तर्हि तयैव । न । केवलमसिद्ध्या पक्षधर्मताऽ-भावेऽपि[१] व्याप्तिस्सम्भाव्येत । असिद्धिसध्रीचीनस्याप्रसिद्धविशेषणत्वस्य सत्त्वे तु व्याप्तिरपि न सम्भवतीति विशेषसत्त्वात् ।

असिद्धिसाहित्येनाप्रसिद्धविशेषणत्वं दूषणमिति स्फुटं कुतो नाभ्यधिषत टीकाकारा इति चेत् । अवगच्छ गाम्भीर्यं टीकायाः । उत्तरत्र **"हेतुसिद्धावेव सगुणत्वसिद्धेरनुमेयाभाव"** इति कथनेन सर्वकर्तृत्वरूपहेतोरपि गुणत्वेन सगुणत्वरूपसाध्यरूपतया पर्यवसानस्य लाभेन हेतुरपि सर्वकर्तृत्वं विशेषणपदेनैव विवक्षाञ्चक्र इत्यप्रसिद्धविशेषणत्वमित्यनेनैव साध्याप्रसिद्धिः, पक्षे हेतोरप्रसिद्धिरपि न्यरूपीति ।

---

१ समुचितदेशवृत्तित्वस्यैव हेतोस्स्वीकारादिति भावः ।

### बुद्धिपूर्वं सर्वकर्तृत्वादिति प्राचीनाभिमतहेतुघटकविशेषणस्य व्यभिचारवारकत्वमेवाश्रयणीयमिति प्रतिपादनम्

व्यभिचारावारकत्वेऽप्यसिद्धिवारकतया सार्थक्यसम्भवादिति कश्चिदाह[१]। कस्तस्याशयः। प्रकृते व्यभिचारावारकत्वेऽप्यसिद्धिवारकत्वमस्तीति वा प्रकृते व्यभिचारवारकत्वेऽपि सर्वत्र व्यभिचारवारकत्वेनैव सार्थक्यं प्रदर्शनीयमिति नियमो नास्तीति वा। नाद्यः। प्रकृते तदभावात्। न हि सर्वकर्तृत्वादित्युक्तेऽसिद्धिः। ब्रह्मणस्सर्वकर्तृत्वात्।

नन्वन्यतरासिद्धिः, नाङ्गीकुर्वते हि सर्वकर्तृत्वं प्रतिवादिन इति चेत्, सत्यम्। परं न सा बुद्धिपूर्वमिति विशेषणेऽपि विशोषणमाप्नोति। [२]मा हि सम्भून्नाङ्गीकरोति सर्वकर्तृत्वमङ्गीकरोति च बुद्धिपूर्वं तदिति। न चागमाग्निर्विशोषयति तामिति वाच्यम्। कृतं तर्हि बुद्धिपूर्वमिति विशेषणेन। न द्वितीयः। सँव्वदामहे यतः। मा वाचि तथा टीकाकारैर्नियमः। प्रकृतेऽसिद्धिवारकत्वप्रसत्त्यभावाद् व्यभिचारवारकत्वमेव वक्तव्यम्। तदपि चेन्नास्ति, नास्ति तर्ह्यवैयर्थ्यमित्येवाशय्यते।

किञ्चान्ततस्तैरपि[३] जडप्रकृतौ व्यभिचारवारकतयैव सार्थक्यमुपापादि बुद्धिपूर्वमिति विशेषणस्य।

---

१ व्यभिचारवारकं विशेषणं यथा व्याप्तिग्रहौपयिकमिति सार्थकमेवमेवासिद्धिवारकमपि व्याप्तिग्रहं सहकरोति। अतोऽसिद्धिवारकमपि सार्थकम्। खं.चं.पा.वाके-२३२

२ न हि सम्भवतीत्यर्थः।

३ तच्च सर्वकर्तृत्वं जडे प्रकृतावपि गतम्। उपादानतया तस्या अपि सर्वकर्तृत्वात्। तद्व्यावृत्त्यर्थं बुद्धिपूर्वमित्युपस्कर्तव्यम्। खं.चन्द्रिकायां.- तत्पा.वाके च- २३३

**बुद्धिपूर्वं सर्वकर्तृत्वादिति हेतौ दलकृत्यचिन्तापूर्वकं व्यभिचारस्यासम्भवदुक्तिकत्व-प्रदर्शनेन बुद्धिपूर्वमित्यस्य टीकोक्तवैयर्थ्यस्थैर्यप्रतिपादनम्। अर्थसङ्कोचेन सार्थक्ये मूलकृतोऽकुशलत्वप्रसङ्गोद्भावनं च**

केवलं कर्तृत्वादित्युक्ते कुलालादौ घटादिकर्तृत्वे सत्यपि सार्वज्ञाद्यभावाद् व्यभिचारः। तत्परिहारहेतवे बुद्धिपूर्वमिति विशेषणमिति चेत्। न। बुद्धिपूर्वमिति विशेषणे प्रत्तेऽपि कुलालादौ व्यभिचारपरिहारो न भवति। कुलालादेरपि बुद्धिपूर्वं घटादिकर्तृत्वात्। अथ बुद्धिपूर्वं सर्वकर्तृत्वादिति हेतुरुच्यते। घटादिकर्तृत्वेऽपि कुलालादेस्सर्वकर्तृत्वाभावान्न व्यभिचार इति चेत्तर्हि सर्वग्रहणेनैव व्यभिचारस्य परिहृतत्वाद्बुद्धिपूर्वमिति विशेषणं न सार्थक्यं भजते। नन्वदृष्टद्वारा सर्वकर्तृत्वं जीवेष्वस्तीति व्यभिचारः। तन्निवृत्तये बुद्धिपूर्वमिति विशेषणमिति चेत्। न। अदृष्टद्वारा बहुतरकार्यकर्तृत्वेऽपि जीवानां सर्वकर्तृत्वं न सम्भवति। तदभोग्यस्य तददृष्टजन्यत्वाभावात्। तथा च सर्वग्रहणेन व्यभिचारः परिह्रियत एवेति बुद्धिपूर्वमिति विशेषणमनपेक्षितमेव। एकैकस्य जीवस्य सर्वकर्तृत्वाभावेऽपि सम्भूय जीवानां सर्वकर्तृत्वाद् व्यभिचारो भवत्येवेति बुद्धिपूर्वमिति विशेषणं सार्थकमिति चेत्। न। एकनिष्ठसर्वकर्तृत्वस्य सार्वज्ञादिसिद्ध्यङ्गत्वेनाभिप्रेततया सम्भूय सर्वकर्तृत्वमादाय व्यभिचारोक्तेरनभिप्रेतदूषणोक्तित्वेनासङ्गतेः। सम्भूयापि जीवानां रमामात्रभोग्यानन्दादिपदार्थकर्तृत्वाभावेनानैकान्तिकताऽभावाच्च। सर्वशब्दसङ्कोचेनानैकान्तिकतायां सम्भूय सङ्कुचितसर्वज्ञत्वस्यापि जीवेषु सम्भवेन पुनर्व्यभिचाराप्रचार एव। न च सर्वपदग्रहणेऽपि कालादौ सर्वकारणे व्यभिचारो दुष्परिहर इति बुद्धिपूर्वमिति विशेषणं सार्थकमिति वाच्यम्। जडे तस्मिन् कारणत्वसत्त्वेऽपि कर्तृत्वाभावादेव व्यभिचारपरिहारात्। **"बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमिति निश्चितमि"**त्यनुव्याख्यानोक्तेः। न चेह कारणत्वमात्रं कर्तृत्वमिति

विवक्षित्वा कालादौ व्यभिचारमाशङ्क्य तत्परिहारार्थं बुद्धिपूर्वमिति विशेषणमिति वाच्यम् । बुद्धिपूर्वप्रवृत्तिरूपमुख्यकर्तृत्वविवक्षयैव व्यभिचारपरिहारसम्भवे गौणं कर्तृत्वं विवक्षित्वा विशेषणपूरणे प्रयतमानस्याकुशलत्वप्रसङ्गात् ।

**निर्दोषोपपत्तिरनुमेत्यत्रेव सर्वकर्तृत्वादित्यत्रापि गौणकर्तृत्वविवक्षया व्यभिचारसम्भवेन विशेषणसार्थक्यशङ्कापुरस्सरं बहुलप्रयोगभावाभावाभ्यां वैषम्येन तदसम्भव इति समाधानम्**

ननु **निर्दोषोपपत्तिरनुमानमि**त्यत्रोपपत्तिशब्देनैव मुख्यार्थविवक्षायां निर्दोषोपपत्तिलाभसम्भवेऽप्यमुख्यार्थं विवक्षित्वोपपत्त्याभासस्यापि प्रसक्तौ तद्वारणाय निर्दोषग्रहणं दृष्टम् । तद्वदत्रापि कुतो न स्यादिति चेत् । न । वैषम्यात् । तत्र निर्दोषत्वमनन्तर्भाव्य, 'समीचीनो हेतुरनैकान्तिको हेतुरित्यादिवद्' 'व्यभिचरितोपपत्तिरव्यभिचरितोपपत्तिरि'त्यादिबहुलप्रयोगदर्शनाद्रूढलक्षणादिना तत्र तथाभावसम्भवेऽपि बुद्ध्याद्यनुपरक्तकारणत्वमात्रार्थे कर्तृशब्दस्य बहुलप्रयोगाभावान्न तथाभावस्सम्भवति । बहुलप्रयोगाभावेऽप्यमुख्यवृत्त्या तद्ग्रहणे च प्रयोजनं वाच्यम् । विना प्रयोजनममुख्यवृत्त्याश्रयणे च टीकोक्ताकुशलत्वप्रसङ्गानिस्तारः ।

किञ्च तत्रारूढलक्षणाद्याश्रयणेऽपि उत्तरत्रानुमानदोषनिरूपणाय पातनिकार्थतया निर्दोषग्रहणस्य तत्र सार्थक्यवदत्र सार्थक्यादृष्टेश्च ।

**गीतातात्पर्योदाहृतं कर्तृत्वं गौणम्, अनुव्याख्यानोक्तं च प्रधानमिति विषयोपक्षेपपूर्वकं सर्वकर्तृत्वादित्यत्र प्रधानस्यैव बाधकाभावाद् विवक्षेति व्यभिचाराभावसमर्थनम्**

एतेनैव, यदत्राभ्यधायि[१] "सर्वकर्तृत्वं जडप्रकृतिमप्यलङ्करोतीत्यनैकान्तिकता

---

१ सर्वकर्तृत्वं जडप्रकृतावपि प्रतिपादयन्ति वेदन्तिनः । न तस्यां सार्वज्ञम् । अतो बुद्धिपूर्वमिति । ........ पश्यतु गीतातात्पर्ये तृतीयाध्याये **कर्तृत्वं द्विविधं प्रोक्तं विकारश्च स्वतन्त्रता । विकारः प्रकृतेरेव विष्णोरेव स्वतन्त्रता ।** इति पैङ्गिश्रुतिमुदाजहार भाष्यकारः । तत्रैवोत्तरत्र "**यस्मात् स्वतन्त्रकर्तृत्वं विष्णोरेव नचान्यगम् । तदधीनं स्वतन्त्रत्वं स्वावरापेक्षैव तु । जीवस्य विकृतिर्नाम कर्तृत्वं जडसंश्रयम् ।**

प्रसज्यते। सा मा प्रसङ्क्षीति बुद्धिपूर्वमिति विशेषणम्। **'कर्तृत्वं द्विविधं प्रोक्तं विकारश्च स्वतन्त्रता। विकारः प्रकृतेरेव विष्णोरेव स्वतन्त्रते'**ति गीतातात्पर्ये योदाजह्रे पैङ्गिश्रुतिस्सा, यच्च तत्रैवोदाहृतं, **यस्मात्स्वतन्त्रकर्तृत्वमित्यादिब्रह्मतर्क-**वचनं तच्च जडप्रकृतयेऽपि कर्तृत्वं जगदात्मना विकाररूपं विश्राणयामास यत" इति, तदपि निरस्तम्।

विकाराकारं कर्तृत्वं प्रकृतिमप्यध्यास्त इति गीतातात्पर्यनिर्णय औच्यतेति युक्तमुक्तम्[१]। परन्तु तदमुख्यम्। **'बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमिति निश्चितमि'**त्यनुव्याख्युर्हि भगवत्पादाचार्याः। निश्चितपदस्वारस्यानुरोधेन चेतनगतस्य बुद्धिघटितकर्तृत्वस्यैव मुख्यत्वमाचार्याभिप्रेतमिति स्फुटम्। **'बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वम्। न ह्यसतो बुद्ध्यादि सम्भवती'**ति व्यवृण्वंश्च पद्मनाभतीर्थभट्टारकाः। मुख्यामुख्ययोरसति बाधके मुख्यमेवोपादीयेतेति तु निष्टङ्कितम्।

प्रकृते च न वर्तते बाधकमिति मुख्यमेव कर्तृत्वमाशयिषताशेशावताराः[२] श्रीमदाचार्यचरणा इत्यभिप्रायन् टीकाकृत्पादाः।

**अनेकैः प्रमाणैर्बुद्धिपूर्वप्रवृत्तिरूपकर्तृत्वं मुख्यं, विकाररूपकर्तृत्वममुख्यमिति प्रतिपाद्य व्यभिचारचोदनस्य तत्परिहारप्रयत्नस्य चायुक्तत्वसमर्थनम्।**

किञ्च शास्त्र [३]इतरव्यपदेशादिसूत्रेषु जीवस्य कर्तृत्वं निषिध्यते,

---

पुमान्दोग्धा च गौर्दोग्ध्री स्तनो दोग्धेतिवत्क्रमात्।" ब्रह्मतर्कवचनेनापि प्रकृतिः कर्त्रीति न्यरूप्यानन्दतीर्थमुनिना॥ खं.चं.पा.वा.-२३३

१ प्रकृतेर्जगदात्मना विकारोऽपि कर्तृत्वम्,तच्चैतच्छ्रुत्यादिसम्मतमिति चाभ्युपेत्येदमुक्तमित्येतदुत्तरत्र स्फुटीभविष्यति।

२ आशा भारती, 'प्राणो वा आशाया भूयानिति' श्रुतेः। तदीशो मुख्यप्राणः,तदवतारा इत्यर्थः।

३ जीवकर्तृत्वपक्षश्श्रुतिप्राप्तो विस्तरान्निराक्रियते। २-१-२२ सूत्रे भाष्यम्।
चेतनत्वेप्यश्मादिवदस्वतन्त्रत्वात् स्वतःकर्तृत्वानुपपत्तिर्जीवस्य। २-१-२४ सूत्रे भाष्यम्।

[१]रचनानुपपत्त्यादिसूत्रेषु च प्रकृत्यादिजडस्यापि। तद्वाक्यावलोकने चेदं स्फुटं विज्ञायते, यद्बुद्धिपूर्वप्रवृत्तिरूपं कर्तृत्वमेव मुख्यम्। विकाररूपकर्तृत्वममुख्यमिति।

तथाहि- यत्र यत्र जीवस्य कर्तृत्वं निषिध्यते तत्र सर्वत्रापि **स्वतः**कर्तृत्वं नास्तीति, कर्तृत्वस्य सत्त्वेऽपि **स्वातन्त्र्यं** नास्तीत्याद्येवोच्यते। न तु सामान्यतो 'जीवो न कर्ते'ति कर्तृत्वं नास्तीति। कुत एतदिति वाच्यम्।

'जीवो न कर्ते'ति सामान्यत उक्ते, कर्तृशब्देन हि बुद्धिपूर्वप्रवृत्तिरूपयोः स्वतन्त्रकर्तृत्वपरतन्त्रकर्तृत्वयोरुभयोरप्यस्ति प्रसक्तिः। अतः प्रसक्तयोरुभयोरपि नेत्यनेन निषेधः कृत इति प्रतीतिस्स्यात्। तद्वारणाय स्वत इति, स्वातन्त्र्यमिति वा विशेषणमुपादीयत इति चेत्।

एवं तर्हि तद्वदेव यदि विकाररूपकर्तृत्वस्यापि कर्तृशब्दमुख्यार्थत्वं स्यात्तदा तस्यापि कर्तृशब्देन प्रसक्तत्वात् स्वतन्त्रकर्तृत्वस्य जीवेऽभावबोधनाय स्वत-इत्यादिविशेषणवद् विकाररूपकर्तृत्वस्याप्यभावबोधनाय विशेषणं किञ्चिदुपा-दद्यात्। न च क्वापि तादृशं विशेषणमुपादीयते। न वा विकाररूपकर्तृत्वं नास्तीति पृथगुच्यते। ततोऽवगम्यते विकाररूपकर्तृत्वममुख्यमिति। अत एव च सामान्यत उक्तेन कर्तृशब्देन न तस्य ग्रहणप्रसक्तिरिति।

एवमेव यत्र जडस्य कर्तृत्वं निषिध्यते तत्र सामान्यतः 'अचेतनं कर्तृ न भवती'त्येवोच्यते। न तु 'स्वतन्त्रं कर्तृ न भवती'ति, 'बुद्धिपूर्वं कर्तृ न भवती'ति

---

१ अचेतनस्य स्वतःप्रवृत्त्यनुपपत्तेर्नानुमानपरिकल्पितं प्रधानं जगत्कर्तृ। २-२-१ सूत्रे भाष्यम्।
आनुमानं- अनुमानपरिकल्पितं न जगत्कर्तृ। कुतः? स्वतन्त्रप्रवृत्तिर्हि रचना नाम। त.प्रदी
स्वतःप्रवृत्तिमदेव हि कर्तृ भवति। न च प्रधानस्य स्वतःप्रवृत्तिर्युक्ता अचेतनत्वाद् घटवत्। त.प्रका
रचनानुपपत्तेस्तन्न सर्वज्ञानुमागतम्। अचेतनं जगत्कर्तृ..... इति। अनुव्याख्यानम्।
प्रधानं जगत्कर्तृ न भवति। इति सन्यायरत्नावली

वोच्यते। यदि च विकाररूपकर्तृत्वस्यापि कर्तृशब्दमुख्यार्थत्वं स्यात्तर्हि 'अचेतनं प्रधानं न जगत्कर्तृ'इति सामान्यत उक्ते सति प्रधाने विकाररूपकर्तृत्वमपि नास्तीति प्रतीतिस्स्यात्। तद्वारणाय 'बुद्धिपूर्वं कर्तृ न भवती'ति विशेषण-मुपादद्यादेव। न च क्वापि प्रधानस्य कर्तृत्वनिषेधप्रसङ्गे तादृशं विशेषणमुपादीयते। तेन स्फुटमिदं यद् विकाररूपकर्तृत्वममुख्यमिति।

किञ्च यदि विकाररूपकर्तृत्वस्यापि कर्तृशब्दमुख्यार्थत्वं स्यात्तदा 'प्रधानं न जगत्कर्तृ'इति सामान्यत उक्ते सति 'ननु कथं नेत्युच्यते? विकाररूपकर्तृत्वस्य स्वयमाचार्यैरङ्गीकारादिति शङ्कित्वा, विकाररूपकर्तृत्वस्य सत्त्वेऽपि बुद्धिपूर्वप्रवृत्ति-रूपकर्तृत्वं नास्तीति समाधातव्यं स्यात्। न चैवंविधे शङ्कासमाधाने कुत्रचिदुपलभ्येते। तेनापीदं विज्ञायते यद् बुद्धिपूर्वप्रवृत्तिरूपं कर्तृत्वमेव मुख्यम्। न विकाररूपकर्तृत्वमिति।

किञ्चाचार्यैर्भाष्यानुभाष्यादिषु 'प्रधानं न जगत्**कर्तृ**' इत्येवोच्यते न पुनः 'प्रधानं न जगत्**कारणमि**'ति। तत्कुत इति वाच्यम्। नन्वाचार्यैरपि प्रधानस्य जगत्कारणत्वमुपादानकारणत्वरूपमङ्गीक्रियत एव। तत्कथं सामान्यतो 'जगत्**कारणं** ने'ति वक्तुं शक्यमिति चेद् हन्त तर्हि विकाररूपं जगत्कर्तृत्वमपि प्रधानस्य भगवत्पादैरङ्गीकृतमिति कथं सामान्यतः 'प्रधानं न जगत्**कर्तृ**' इति वक्तुं शक्यम्। ननु च सामान्यतः 'प्रधानं **कारणं** ने'त्युक्ते कारणशब्देनोपादान-कारणत्वनिमित्तकारणत्वयोरुभयोरपि प्रसक्त्योभयोरपि प्रधाने निषेध इति प्रतीतिस्स्यात्। तत्प्रतीतिर्मा भूदिति 'न जगत्**कारण**'मित्यनुक्त्वा 'न जगत्**कर्तृ**'-इत्युच्यत इति चेदेवन्तर्हि सामान्यत उक्तेन '**कर्तृ**'शब्देन नास्त्युभयोर्बुद्धि-पूर्वप्रवृत्तिविकारयोः प्रसक्तिरित्येवायातम्। तथा चागत्या बुद्धिपूर्वप्रवृत्तिरूपकर्तृत्वस्य

कर्तृशब्दमुख्यार्थत्वमत एव च प्रसिद्धत्वमत एव चास्यैव ग्रहणं सामान्यत उक्तेन कर्तृशब्देनेति, विकाररूपकर्तृत्वस्य च कर्तृशब्दामुख्यार्थत्वमत एव चाप्रसिद्धत्वमत एव चास्याग्रहणं सामान्यत उक्तेन कर्तृशब्देनेत्येवैष्टव्यं भवति। तदेवं प्रकृतेऽपि सर्वकर्तृत्वादित्युक्तेऽमुख्यत्वादेव न विकाररूपकर्तृत्वस्य प्रसक्तिरिति न व्यभिचारचोदना तत्परिहारप्रयत्नश्च सङ्गच्छेते इति।

किञ्च जगज्जन्मादि**कारणत्वस्य** ब्रह्मलक्षणस्य प्रकृतावतिव्याप्तिमाशङ्क्य निमित्तकारणत्वविवक्षया परिहारवत्, जगज्जन्मादि**कर्तृत्वरू**पस्य विष्णुलक्षणस्य प्रकृतावतिव्याप्तिः कुतस्सूत्रकारादिभिर्न शङ्कितेति वाच्यम्। उपादानकारणत्वस्यापि कारणशब्दमुख्यार्थत्वादस्त्यतिव्याप्तेः प्रसक्तिः। अतस्तद्वारणाय प्रयतनीयम्। विकाररूपकर्तृत्वस्य त्वमुख्यत्वान्न कर्तृशब्देन ग्रहणमिति न प्रसक्तिरतिव्याप्तेरित्येव वक्तव्यम्। तथा च विकाररूपकर्तृत्वस्यामुख्यत्वादेव प्रकृतेऽपि कर्तृशब्देन तस्याप्रसक्तेर्व्यभिचारचोदनं तत्परिहारप्रयत्नश्च सर्वथाऽसङ्गत एव।

किञ्च पाशुपताधिकरणे **सम्बन्धानुपपत्तेरिति** सूत्रे **अशरीरत्वतस्तस्य सम्बन्धो जगता क्वचित्। कर्तृत्वेन न युज्येत....** (अनु) **अशरीरत्वात्तस्य जगता सम्बन्धो न युज्यते कर्तृत्वेन मृतपुरुषवत्** (भाष्य) इति "शिवो न कर्ता अशरीरत्वादि"त्यनुमानमुक्तमाचार्यैः। यदि च विकाररूपकर्तृत्वमपि मुख्यम्, अत एव च सामान्यत उक्तेन कर्तृपदेन तस्यापि ग्रहणं स्यात्तर्हि प्रकृतौ व्यभिचारः स्यात्। अकर्तृत्वरूपसाध्यस्याभावेऽपि अशरीरत्वस्य सत्त्वात्। तथा च व्यभिचरितं हेतुं ब्रुवाणस्याचार्यस्याकौशलप्रसङ्गः स्यात्। न चाचार्यस्य सर्वथाऽकौशलं सम्भावितम्। अतो नास्ति व्यभिचार इति वाच्यम्। तदर्थं च नास्ति सामान्यत उक्तेन कर्तृपदेन विकाररूपकर्तृत्वस्य ग्रहणप्रसक्तिरिति स्वीकर्तव्यम्। तदर्थं च विकाररूपकर्तृत्वममुख्यमित्येवाकामेनाप्येष्टव्यम्।

किञ्चेदं वाच्यम्। जीवस्य कर्तृत्वप्रतिपादके **"कर्ता शास्त्रार्थवत्त्वादि"**ति सूत्रे सामान्यत उक्तेन कर्तृशब्देन विकाररूपकर्तृत्वस्य प्रसक्तिरस्ति न वेति। आद्ये जीवे जगदात्मना विकाररूपकर्तृत्वमस्तीति प्रतीतिस्स्यात्। तद्व्यावृत्त्यर्थं सूत्रकृता भाष्यकृता सर्वैष्टीकाकारैर्वा न प्रयतितमित्यकौशलप्रसङ्गः। द्वितीये विकाररूप-कर्तृत्वस्य सूत्रकारेण भाष्यकारादिभिश्च स्वयमङ्गीकारात् कुतो न प्रसक्तिरिति वाच्यम्। अमुख्यत्वादिति चेत्तर्हि प्रकृतेऽपि सर्वकर्तृत्वादित्युक्ते विकाररूप-कर्तृत्वस्यामुख्यत्वादेवाप्रसक्तिरिति तद्वारणाय बुद्धिपूर्वमिति विशेषणमिति कथन्नाम वक्तुं शक्यम्। न हि कोऽपि 'अयं सिंहः क्रूरो भवितुमर्हति सिंहत्वादि'त्युक्ते चित्रलिखितसिंहे व्यभिचारमाशङ्क्य तत्परिहाराय विशेषणदाने प्रयतते।

अथ मतम्। विकाररूपकर्तृत्वं मुख्यमपि प्रकृते **'कर्ता शास्त्रार्थवत्त्वादि'**ति सूत्रे **"ज्ञोऽत एव"** इति पूर्वस्मात् (२-२-१८) सूत्रात् जीवार्थकं 'ज्ञ'इतिपदं वर्तते। जीवप्रकरणं चेदम्। अतो 'ज्ञः कर्ता' इत्युक्ते जीवः कर्तेत्युक्तं भवति। कर्तृशब्दस्य जीवविशेषणतयाऽत्र कथनाज्जीवगतकर्तृत्वस्यैव प्रसक्तिः। न तु विकाररूपस्येति। तर्ह्यत्रापि ब्रह्मणः पक्षतया प्रसक्तत्वात्तद्विशेषणतयैव कर्तृत्वस्योपादानाच्चेतनगतं बुद्धिपूर्वप्रवृत्तिरूपं कर्तृत्वमेव प्रसक्तं न विकाररूपमिति न तदादाय व्यभिचारचोदना सङ्गच्छते। नतरां बुद्धिपूर्वमिति विशेषणस्य सार्थक्यकथनं च।

वस्तुतस्तु **'कर्तृत्वं द्विविधं प्रोक्तमि'**ति पैङ्गिश्रुतिवाक्यं **'विकृतिर्नाम कर्तृत्वं जडसंश्रयमि'**ति ब्रह्मतर्कवचनं वा जीवस्वामिकं यद् बुद्ध्यादिरूपं कर्तृत्वं तस्य प्रकृतिविकारताप्रतिपादनपरं, न तु प्रकृतेर्यो जगदात्मना विकारस्तस्य

कर्तृतारूपत्वप्रतिपादनपरम् । तदेतदनुपदमेव निरूप्यते । तथाचैतद्वाक्योदाहरण-
पूर्वकं व्यभिचारचोदनादिकमयुक्तमेव ।

**'कर्तृत्वं द्विविधमि'ति कर्तृत्वविभागप्रतिपादकपैङ्गिश्रुतेः सप्रमाणमभिसन्धिनिरूपणम्**

तथाहि- तदयं **'कर्तृत्वं द्विविधमि'**त्यादिपैङ्गिश्रुत्यर्थः

**कर्तृत्वं द्विविधं प्रोक्तं विकारश्च स्वतन्त्रता ।**
**विकारः प्रकृतेरेव विष्णोरेव स्वतन्त्रता ॥ इति**

चेतनगतमेव कर्तृत्वं द्विविधं प्राकृतमप्राकृतं[१] चेति । तत्राप्राकृतं स्वेच्छा-
धीनप्रवृत्तिमत्त्वरूपं सर्वदा भगवत एव । तदिदमुक्तं **'विष्णोरेव स्वतन्त्रतेति'** ।
मुक्त्यनन्तरं जीवान्तरस्यापि । संसारे तु ईशकोटिव्यतिरिक्तसर्वचेतनानां प्राकृतमेव
प्रकृतिविकारो बुद्धीच्छाप्रयत्नपूर्वकपरिस्पन्दरूपम् । तथा च जीवस्य यत्कर्तृत्वं
(जीवस्वामिकं बुद्धीच्छाप्रयत्नपूर्वकपरिस्पन्दरूपम्) तत्प्रकृतेर्विकारभूतम् । तदेव
च प्रकृतेः कर्तृत्वमित्युच्यते । तदिदमुक्तं **'विकारः प्रकृतेरेवेति'** । तद्यथा छेदन-
करणस्यापि परशोर्देवदत्तकरणत्वव्यवहारो 'देवदत्तस्य करणं परशुरिति' । यथा
च देवदत्तभोगायतनत्वाद्देहस्य,'देवदत्तस्य देह'इति व्यवहारः, एवं तस्यैव पञ्च-
भूतविकारत्वात् 'भूतपञ्चकस्य देह'इत्यप्युच्यते । नैतावता भूतपञ्चकस्य पृथग्देह
उक्तो भवति । एवमेव देवदत्तस्य (देवदत्तस्वामिकं) यत्कर्तृत्वं तस्य चान्तः-
करणादिप्रकृतिविकारत्वात् 'प्रकृतेः कर्तृत्वमि'ति व्यवह्रियते । नैतावता प्रकृतेः
पृथक्[२] कर्तृत्वमुक्तं भवति । अन्यथा[३] जीवकर्तृत्वस्यात्रानुक्तेर्न्यूनता स्यात् ।

---

१ विभागबोधकेऽस्मिन् वाक्ये स्वतन्त्रताप्रतिद्वन्द्वितया प्राकृतविकारस्य ग्रहणात्स्वतन्त्रताया अप्राकृतत्वं विज्ञायत इति भावः ।

२ जगदात्मना विकारस्य कर्तृतारूपत्वमिति भावः ।

३ उक्तरीत्या विभागपरत्वाकथन इत्यर्थः ।

तदिदमभिप्रेत्यैवेदं वचनं ब्रह्मतर्कवचनञ्च जीवकर्तृत्वप्रसङ्ग एवोदाहृतमाचार्यैः । तदनेन वचनेन जीवकर्तृत्वस्य प्राकृतसत्त्वादिगुणोपादेयत्वं, प्राधान्येन भगवत्कर्तृत्वनिमित्तकत्वं चोक्तं भवति ।[१]

तथा च प्रकृतेर्जगदात्मना विकारस्य कर्तृतारूपत्वस्यात्रानुक्तेरेतद्वाक्योदाहरणपूर्वकं व्यभिचारचोदना सर्वथाऽयुक्तैव ।

**जगदात्मना विकारस्य कर्तृत्वरूपत्वेऽपि, तस्य कर्तृशब्दमुख्यार्थत्वेऽपि गीतातात्पर्यवचनविरोधादेव प्रकृते तस्य ग्रहणासम्भवप्रतिपादनपूर्वकं टीकोक्तविशेषणवैयर्थ्यस्य सुस्थिरत्वप्रदर्शनम्**

अस्तु वा प्रकृतेर्जगदात्मना विकारोऽपि कर्तृत्वम्, अस्तु वा तस्य विकाररूपकर्तृत्वस्यापि श्रुत्युक्तत्वात् कर्तृशब्दमुख्यार्थत्वम् । अथापि यद्वचनबलात्प्रकृतेरपि

---

१ इदमेव चात्र वक्तव्यम् । जीवस्य अहमेव कर्तेत्ययं भ्रम एव । कर्तृत्वस्य प्रकृत्युपादेयत्वेन जीवोपादेयत्वाभावात्, कर्तृत्वमुख्यस्वातन्त्र्यस्य च भगवन्निष्ठत्वेन तन्मुख्यस्वातन्त्र्यस्य जीवेऽभावाच्च । अथापि प्राकृतसत्त्वादिगुणोपादेयस्य भगवन्मुख्याधीनस्य बुद्धीच्छाप्रयत्नपूर्वकपरिस्पन्दात्मकस्य कर्तृत्वस्य भगवद्दत्तस्वामित्वमात्रेण जीवस्य कर्तृत्वमिति बोधयितुं हि गीतायाः प्रवृत्तिः । तद्विषय एव हि पैङ्गिश्रुतिवाक्यं ब्रह्मतर्कवचनं च प्रमाणतयोदाहृतम् ।

अत एव हि "प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कारविमूढात्मा कर्ताहमिति मन्यते" । इत्यस्य श्लोकस्य गीतातात्पर्यादिप्रदर्शितोऽर्थो गीताविवृतौ पूज्यपरिमालाचार्यैरेवं निरूपितः । स्फुटत्वात् तद्वाक्यान्येवोद्ध्रियन्ते ।

गीता.वि- अत्र प्रकृतिशब्देन जीवस्वभावेश्वरजडप्रकृतयो ग्राह्याः । प्रकृतेः- प्रकृष्टकृतिमत्त्वहेतुना प्रकृतिपदवाच्यस्य हरेः गुणैः- इच्छाज्ञानप्रयत्नादिरूपगुणैः धर्मैः स्वतन्त्रैः, तथा प्रकृतेः- उत्तममध्यमाधमरूपजीवराशिस्वभावस्य गुणैः- अनुगुणैः तत्त्वज्ञानमिश्रज्ञानमिथ्याज्ञानादिरूपधर्मैरीशाधीनैः, तथा प्रकृतेः- जडप्रकृतेः सम्बन्धिभिः गुणैः- तत्कार्यभूतैः सत्त्वरजस्तमोगुणैः, प्रकृतेः विकारभूतैः देहेन्द्रियान्तःकरणरूपगुणैः क्रियमाणानि सर्वशः कर्माणि- साधुकर्ममिश्रकर्मासाधुकर्माणि प्रति अहंकारविमूढात्मा सन् कर्ताहं- स्वतन्त्रकर्ताहमिति मन्यते । ईश्वरः स्वतन्त्रकर्ता सन् स्वज्ञानेच्छादिना स्वाधीनकर्त्रा त्रिविधजीवस्वभावमनुसृत्य प्रकृतिविकारजीवकरणैः प्रकृतिकार्यसत्त्वादिगुणरूपोपादानकारणेन कर्म कारयति । तत्क्रियमाणकर्मणामहमेव स्वतन्त्रकर्तेत्यात्मानमज्ञो जनो मन्यत इत्यर्थः । इति ।

विकाररूपकर्तृत्वमस्तीत्याद्यभिधीयते तत्रत्यगीतातात्पर्यवचनविरोधादेव विकार-रूपकर्तृत्वस्य नात्र ग्रहणप्रसक्तिरित्यवधेयम् ।

तथाहि- **गी.ता- "यस्मात् स्वतन्त्रकर्तृत्वं विष्णोरेव नचान्यगम् । तदधीनं स्वतन्त्रत्वं स्वावरापेक्षैव तु । जीवस्य विकृतिर्नाम कर्तृत्वं जडसंश्रयम् । पुमान्दोग्धा च गौर्दोग्ध्री स्तनो दोग्धेतिवत्क्रमात् ।"** इतिब्रह्मतर्कवचनादीश्वरजीवप्रकृत्यादीनां कर्तृत्वमकर्तृत्वं च **विभागेन ज्ञातव्यं** सर्वत्र । इति

**गी.ता.टीका-** यत्रेश्वरादीनां कर्तृत्वमुच्यते तत्रेश्वरस्य स्वतन्त्रकर्तृत्वमित्यादि विभागेनैव ज्ञातव्यम् । यत्रेश्वरादीनामकर्तृत्वमुच्यते तत्रेश्वरस्य परतन्त्रकर्तृत्वमस्वीयं नास्तीत्यादि विभागेनैव ज्ञातव्यम् । न तु यत्र कर्तृत्वमुच्यते तत्र सर्वेषां स्वतन्त्रकर्तृत्वमेव, यत्राकर्तृत्वमुच्यते तत्र सर्वेषां सर्वथाकर्तृत्वराहित्यं ज्ञातव्यम् । इति

**भावदीपः- इत्यादिविभागेनेति ।** यत्र जीवस्यैव कर्तृत्वमुच्यते तत्र पराधीनकर्तृत्वं, यत्र प्रकृतेरेव कर्तृत्वमुच्यते 'कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैरि'त्यादौ तत्र विकाररूपं कर्तृत्वमिति ध्येयम् । इति

तदयं ग्रन्थसन्दर्भः ।

"मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥" गी.३-३०

इत्यस्य व्याख्यानम्

"नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् ।
तथापि मत्कृता पूजा तत्प्रसादेन नान्यथा ॥

तद्भक्तिस्तत्फलं मह्यं तत्प्रसादः पुनःपुनः ।
कर्मन्यासो हरावेवं विष्णोस्तृप्तिकरस्सदा ॥ इति

अत्र हि **'नाहं कर्ता'** इति जीवस्य कर्तृत्वाभाव उच्यते। **'हरिः कर्ता'** इति हरेरेव कर्तृत्वमुच्यते। **'मत्कृता'** इति जीवस्यापि कर्तृत्वमस्तीत्युच्यते।

"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः।" गी ३-२७ इति

"कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः।" गी ३-५ इति च

पूर्वत्र प्रकृतेरेव कर्तृत्वमुच्यते। कथमिदं सर्वं विरुद्धमुच्यत इति शङ्कायामुक्तम्- **यस्मात् स्वतन्त्रकर्तृत्वमित्यादि..**। तदनेन सर्वेषामपि कर्तृत्वमस्तीति सिद्धम्। परं शङ्काया उत्तरं न प्राप्तम्, अत उक्तमाचार्यैः। **इतिब्रह्मतर्कवचनादित्यादि**।

तस्य चायमर्थः- सत्यम्। ईश्वरजीवप्रकृत्यादीनां कर्तृत्वमकर्तृत्वं चास्तीति, अत एव क्वचित्तेषां कर्तृत्वमुच्यते, क्वचिदकर्तृत्वमुच्यत इति च। परं यत्र यत्र कर्तृत्वमुच्यते तत्र सर्वत्रापि, स्वतन्त्रकर्तृत्वमेव ग्राह्यमिति न मन्तव्यम्। किन्तु यत्रेश्वरस्यैव कर्तृत्वमुच्यते तत्र स्वतन्त्रकर्तृत्वमेव (अन्यानधीनस्वेच्छाधीन-प्रवृत्तिरूपं) ग्राह्यम्। यत्र जीवस्यैव कर्तृत्वमुच्यते तत्र पराधीनं कर्तृत्वं (अन्याधीनस्वेच्छाधीनप्रवृत्तिरूपं) ग्राह्यम्। यत्र पुनः प्रकृतेरेव कर्तृत्वमुच्यते तत्र विकाररूपं तद् ग्राह्यमिति।[१]

एवं यत्रेश्वरस्याकर्तृत्वमुच्यते तत्र पराधीनं विकाररूपं च कर्तृत्वं नास्तीति, यत्र जीवस्याकर्तृत्वमुच्यते तत्र स्वतन्त्रं, विकाररूपं च कर्तृत्वं नास्तीति, यत्र

---

१ वस्तुतस्तुपक्षे यत्र प्रकृतेः कर्तृत्वमुच्यते तत्र जीवगतं कर्तृत्वं प्रकृतिविकारभूतमित्यर्थ इति पूर्वमेवावोचाम। एवं जीवस्याकर्तृत्वमपि कर्तृत्वेन स्वयं परिणामाभाव इति, प्रकृतेरकर्तृत्वमपि बुद्ध्यादिस्वामित्वाभाव इति च बोध्यम्।

प्रकृतेरकर्तृत्वमुच्यते तत्र स्वतन्त्रं, पराधीनं च बुद्ध्यादिरूपकर्तृत्वं नास्तीति मन्तव्यमिति न कुत्रापि कश्चन विरोध इति।

तदनेन स्पष्टमभिहितमाचार्यैः। यत्र प्रकृतेः कर्तृत्वमुच्यते तत्र विकाररूपं कर्तृत्वं ग्राह्यं न तु प्रसिद्धं बुद्ध्यादिरूपं कर्तृत्वमिति। परं यत्र सामान्यतः कर्तृत्वमुच्यते तत्र सर्वत्राप्यनुव्याख्यानोक्तं बुद्धिपूर्वप्रवृत्तिरूपमेव ग्राह्यमिति।

अत एव हि **"कर्तृत्वं द्विविधं प्रोक्तमि"ति** पैङ्गिश्रुतिवाक्यं,**"यस्मात् स्वतन्त्रकर्तृत्वमि"त्यादिब्रह्मतर्क**वचनं चाचार्यैर्विशिष्य ईश्वरजीवप्रकृत्यादीनां कर्तृत्वप्रसङ्गकगीतावाक्यसन्दर्भ एवोदाहृतम्। **"बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमिति निश्चितम्।"** इति तु **"तन्मनोऽकुरुत"** इति सामान्यतः कर्तृत्वप्रसङ्ग उक्तम्।

तदेतदतिक्रम्य सामान्यतः कर्तृत्वादित्युक्तेऽपि जगदात्मना विकाररूप-कर्तृत्वमादाय व्यभिचारं चोदयतस्तत्परिहारार्थं च बुद्धिपूर्वमिति विशेषणमाचार्यैः कथितमिति यथाकथाच कथयतः खण्डार्थचन्द्रिकाकृतः कथमाचार्यवचनविरोधो न स्यात्।

तथा च सामान्यतः कर्तृत्वादित्युक्ते लोकवेदोभयप्रसिद्धस्य बुद्ध्यादिरूप-कर्तृत्वस्यैव ग्रहणप्रसक्तिर्न तु विकाररूपकर्तृत्वस्य, प्रकृते च ब्रह्मणः पक्षत्वेन तदनुगुणस्य चेतनसम्बन्धिकर्तृत्वस्यैव हेतुगतकर्तृत्वपदेन प्राप्तत्वेन विकाररूप-कर्तृत्वस्य सुतरामप्रसक्तेश्च तदादाय व्यभिचारचोदनस्याप्रसङ्गात्तत्परिहारार्थं बुद्धिपूर्वमिति विशेषणमिति **खं.चं.**वचनं गीतातात्पर्यभावानवबोध-निबन्धनमित्यवधेयम्।

**प्रकृते कर्तृत्वादित्यनेन विकाररूपकर्तृत्वे गृहीतेऽपि प्रकृतेः सर्वकर्तृत्वाभावादेवाव्यभिचार इति प्रतिपादनपूर्वकं टीकोक्तदोषयोः सुस्थिरत्वप्रतिपादनम्**

अस्तु वा सर्वकर्तृत्वादित्यत्र कर्तृत्वपदेन विकाररूपकर्तृत्वस्य ग्रहणमत्रेति। अथापि नानैकान्तिकता कान्ता। तथाहि- सर्वकर्तृत्वादिति हेतुगतसर्वपदेन किं सङ्कोचेनाभूत्वाभवनरूपोत्पत्तिमतां पदार्थानां ग्रहणं, किंवाऽसङ्कोचेन पराधीन-विशेषाप्तिरूपोत्पत्तिमतां सर्वेषाम्। आद्ये यद्यप्यभूत्वाभवनरूपोत्पत्तिमतां पदार्थानां साक्षात्परम्परया वा प्रकृतिविकारत्वेन, प्रकृतेस्तादृशसर्वपदार्थोपादानकारणत्व-रूपस्य सर्वकर्तृत्वस्य सत्त्वेन व्यभिचारस्सम्भवतीति तद्वारणाय बुद्धिपूर्वमिति विशेषणमिति कथनं युज्यते, तथाप्यनेनानुमानेन ब्रह्मणोऽभूत्वाभवनरूपोत्पत्ति-मत्सर्वपदार्थज्ञानसाधनसम्भवेऽपि न सिषाधयिषितस्य निरुपचरितसर्वपदार्थज्ञानस्य साधनं सम्भवति। निरुपचरितसार्वज्ञस्यासिषाधयिषितत्वे त्वस्यानुमानस्य केवलव्यतिरेकित्वभङ्गः। **द्वितीयप्रवृत्तिविशेषाया** रमाया अपि तादृशसर्वपदार्थ-कर्तृत्वस्य तादृशसर्वपदार्थज्ञानस्य च सत्त्वात्। द्वितीये रमादीनां यस्सिसृक्षादिरूपो विशेषस्तदुपादानकारणत्वरूपस्य तत्कर्तृत्वस्य प्रकृतावभावादेव न व्यभिचारः। न वा तद्वारणाय बुद्धिपूर्वमिति विशेषणमिति।

तस्मात्सुष्ठूक्तं- '**बुद्धिपूर्वमिति विशेषणस्य व्यर्थत्वादि**'ति, '**वाचकग्रहणेनैवा-प्रसङ्गे गौणं प्रयुज्य व्यभिचारपरिहाराय विशेषणपूरणे प्रयतमानस्याकुशलत्व-प्रसङ्गादि**'ति च।

**प्रवृत्तिरूपकर्तृत्वस्य बुद्धिघटितत्वे, कर्तृत्वस्य बुद्धिव्याप्तत्वाभिधायिसुधाविरोधमाशङ्क्य प्रतिवाद्यादिमतमनुसृत्यैव कर्तृत्वस्य बुद्धिव्याप्तत्वाभिधानम् , न तु सिद्धान्तेऽपि तत्तथेति प्रदर्शनम्**

ननु यदनुव्याख्यानवाक्यमुपजीव्य बुद्धिघटितकर्तृत्वस्य मुख्यत्वाद्युच्यते तद्वाक्यव्याख्यानसुधैव कर्तृत्वस्य बुद्धिघटितत्वं विरुणद्धि। एवं हि तत्र फक्किकाः।

**सुधा–** "अत्र बुद्धिपूर्वप्रवृत्तिरित्येतद्बुद्ध्या विविच्य व्याख्येयम्। तथा हि। स्यात्कर्तृनिषेधैकस्वरूपत्वयोरविरोधः, यदि तृतीयादिविषयत्वमेव कर्तृत्वं स्यात्। न चैतदस्ति। अपि तर्हीच्छाप्रयत्नादिरूपा प्रवृत्तिरेव। सर्वैरपि परीक्षकैस्तस्या एव कर्तृत्वेन निश्चितत्वात्। प्रकरणाच्चैतदेव निश्चितम्। अत्रैव हि विप्रतिपत्ति-र्नान्यत्र। सा चेयं प्रवृत्तिर्बुद्धिपूर्वा बुद्धिव्याप्ता। कार्यायाः प्रवृत्तेर्बुद्धिकारण-कत्वात्। अकार्यायाश्च बुद्धिव्यभिचाराद्यदर्शनात्। न च कर्तृत्वापरपर्यायायाः प्रवृत्तेर्व्यापिका बुद्धिरभावे सम्भवति। ततो व्याप्यं कर्तृत्वमपि न सम्भवत्येवेति कथं कर्तृत्वनिषेधैकस्वरूपत्वयोर्न विरोध इति"। अत्रेच्छाप्रयत्नादिरूपायाः प्रवृत्तेरेव कर्तृत्वस्वरूपत्वमुक्त्वा तस्याः प्रवृत्तेर्बुद्धिव्याप्तत्वमुक्तम्। न तु कर्तृत्वस्यैव बुद्धिघटितत्वमिति चेद्

अस्तु ततः किम् ? न हि चेतनगतकर्तृत्वस्य बुद्ध्यघटितत्वे प्रकृते-र्जगदात्मना विकारस्य कर्तृत्वरूपत्वं वा, तस्य मुख्यत्वं वा, प्रकृते तस्य विवक्षितत्वं वा सिद्ध्यति। प्रकृत उपयोगाभावेऽपि '**सर्वकर्तृत्वशब्दार्थान्तर्गतत्वेन साध्याविशिष्टत्वदोषाच्चे**'ति टीकोक्तान्तिमदोषस्यासम्भवदुक्तिकत्वमिति शङ्कितु-र्गूढाभिसन्धिस्तु सुधाभावनिरूपणेनानुपदमेव निवार्यते।

तथाहि– तदयं भावस्सुधायाः। सर्वैः परीक्षकैर्नैयायिकादिभिः प्रतिवादिभिः प्रागभावकर्तृत्ववादिभिश्च कर्तृत्वमिच्छाप्रयत्नादिरूपा प्रवृत्तिरेवेति निरचीयत। तस्याश्च बुद्धिव्याप्तत्वाद्बुद्धिरहिते प्रागभावे परीक्षकाङ्गीकृतेच्छाप्रयत्नादिरूप-प्रवृत्तिरूपं कर्तृत्वमपि प्रतिवादिना त्वयाऽङ्गीकर्तुं न शक्यत इति प्रतिवादिनं प्रति कथयितुमेव बुद्ध्या विविच्य बुद्धिप्रवृत्तिर्हीति वाक्यं व्याख्यायत टीकाकृत्पादैः प्रतिवाद्यादिमतानुसारेण। न तु सिद्धान्तेऽपि बुद्धिं विनाकृत्येच्छाप्रयत्नादिरूपायाः

प्रवृत्तेरेव कर्तृत्वमित्यभिप्रेत्येति। अत एवोत्तरत्र "**अत्र कर्तृत्वानुवादेन बुद्धिपूर्व-प्रवृत्तिरिति व्याख्यानादि**"त्युक्तम्।

**प्रसङ्गादसदधिकरणीयानुव्याख्यानसुधायाः**
**"कर्ता बुद्धिमानिति शेष"इत्यादिरूपायाः परमतानुसारेण प्रवृत्तिकथनम्।**

एवमेव "**उत्पत्तिनाशकारी च बुद्धिमान् दृश्यते क्वचित्। तद्दृष्टान्तेन सर्वत्र कर्ता किं नानुमीयत**" इत्यत्रापि "**कर्ता बुद्धिमानिति शेषः। अन्यथाऽभावकर्तृत्व-वादिनं प्रति सिद्धसाधनताप्रसङ्गादि**"ति सुधापङ्क्तिरपि योजनीया। प्रतिवादिना बुद्धिरहितस्यापि प्रागभावस्य कर्तृत्वाङ्गीकारात् सिद्धसाधनतापरिहाराय परमतानुसारेणैव बुद्धिमानिति शेषकरणम्। न तु वस्तुगतिमनुरुध्येति।

**प्रमाणलक्षणादिवाक्योदाहरणपूर्वकं सिद्धान्ते कर्तृत्वस्य बुद्धिघटितत्वं प्रतिष्ठाप्य**
**असदधिकरणसुधायाः प्रतिवादिमतेनैव प्रवृत्तत्वसमर्थनम्**

अभिप्रेतं चेदं कर्तृत्वस्य बुद्धिघटितत्वं श्रीमदाचार्याणाम्। "**विमतं सकर्तृकम् इत्यत्र सर्वज्ञत्वस्य पक्षधर्मताबलेन सिद्ध्यङ्गीकारादि**"ति स्पष्टं **प्रमाणलक्षणे** कथनात्।

अत एव "यद्यपि कार्यत्वं सकर्तृकत्वमात्रेण व्याप्तं तथापि भूभूधरादिपक्षधर्मताबलेन सर्वज्ञमेव कर्तारं गमयति। **उपादानादिविषयज्ञानवत एव कर्तृत्वादि**"ति तट्टीकायां व्याख्यातम्।

अत एव **सन्न्यायरत्नावली**वाच्यपि बुद्धिघटितमेव कर्तृत्वं प्रदर्शितमित्यवाच्येव।

अत एव **तत्वनिर्णयटीकायां** सकर्तृकम्- **उपादानविषयकबुद्धिमत्पूर्वक**मिति व्याख्यातम्।

अत एव **तत्त्वोद्योतटीकायामपि**– "न हि क्षित्यादिकर्तृताव्यतिरिक्तमीश्वरत्वं सिषाधयिषितम्। यदर्थं पुनरारम्भो भविष्यति। **सर्वज्ञत्वादेरपि तदन्तर्भावादि**" त्युक्तम्।

अत एव **शास्त्रयोनित्वाधिकरणीयसुधायां**– "क्षित्यादीनां कर्तेत्येतदन्तर्गतमेव सर्वज्ञत्वादिकं न यत्नान्तरमपेक्षते। **निमित्तोपादानफलाद्यभिज्ञस्य तदनुगुणेच्छा-प्रयत्नवत एव कर्तृत्वादि**"त्युक्तम्।

अत **एवासदधिकरणीयचन्द्रिकायामपि "न तृतीयादियोगित्वं कर्तृतेह विवक्ष्यते। किन्तु ज्ञानादियोगित्वं तच्चाभावे न युज्यते।"** इति ज्ञानघटितमेव कर्तृत्वं सिद्धान्तरीत्या व्यासराजतीर्थश्रीमच्चरणैः प्राकाशि।

तथाच सिद्धान्ते कर्तृत्वस्य बुद्धिघटितस्यैव स्वीकारादसदधिकरणीयसुधा प्रतिवाद्यादिमतेनैव प्रवृत्तेति बोध्यम्।

#### कर्मनिर्णये बुद्धिघटितकर्तृत्वाङ्गीकर्तृमायावादिन एव प्रतिवादित्वेनास्य परमतानुसारेण प्रवृत्तेरनाशङ्कनीयत्वप्रदर्शनम्

न चात्रापि प्रतिवादिमतानुसारेण बुद्धिपूर्वमिति विशेषणमिति वाच्यम्। प्रकृते प्रतिवादिभिर्मायावादिभिर्बुद्धिघटितस्यैव कर्तृत्वस्याङ्गीकारात्[१]। अपरब्रह्माणि

---

१ ब्र.सू.शां.भा.जन्माद्यधिकरणे- अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः **सर्वज्ञात्** सर्वशक्तेः कारणाद्भवति तद्ब्रह्मेति वाक्यशेषः।

भामती- अत्र नामरूपाभ्यां व्याकृतस्येति चेतनभावकर्तृकत्वसम्भावनया प्रधानाद्यचेतनकर्तृकत्वं निरुपाख्यकर्तृकत्वं च व्यासेधति। यत् खलु नाम्ना रूपेण च व्याक्रियते तच्चेचनकर्तृकं दृष्टं यथा घटादि। विवादाध्यासितं च जगन्नामरूपव्याकृतं तस्माच्चेतनकर्तृकं सम्भाव्यते। चेतनो हि **बुद्धावालिख्य** नामरूपे घट इति नाम्ना रूपेण च कम्बुग्रीवादिना बाह्यं घटं निष्पादयति। अत एव घटस्य निर्वर्त्यस्याप्यन्तःसङ्कल्पात्मना सिद्धस्य कर्मकारकभावो घटं करोतीति। यथाहुः -

प्रवृत्तेरेव कर्तृत्वमित्यभिप्रेत्येति । अत एवोत्तरत्र **"अत्र कर्तृत्वानुवादेन बुद्धिपूर्व-प्रवृत्तिरिति व्याख्यानादि**"त्युक्तम् ।

**प्रसङ्गादसदधिकरणीयानुव्याख्यानसुधायाः**
**"कर्ता बुद्धिमानिति शेष"इत्यादिरूपायाः परमतानुसारेण प्रवृत्तिकथनम् ।**

एवमेव **"उत्पत्तिनाशकारी च बुद्धिमान् दृश्यते क्वचित् । तद्दृष्टान्तेन सर्वत्र कर्ता किं नानुमीयत"** इत्यत्रापि **"कर्ता बुद्धिमानिति शेषः । अन्यथाऽभावकर्तृत्व-वादिनं प्रति सिद्धसाधनताप्रसङ्गादि**"ति सुधापङ्क्तिरपि योजनीया । प्रतिवादिना बुद्धिरहितस्यापि प्रागभावस्य कर्तृत्वाङ्गीकारात् सिद्धसाधनतापरिहाराय परमतानुसारेणैव बुद्धिमानिति शेषकरणम् । न तु वस्तुगतिमनुरुध्येति ।

**प्रमाणलक्षणादिवाक्योदाहरणपूर्वकं सिद्धान्ते कर्तृत्वस्य बुद्धिघटितत्वं प्रतिष्ठाप्य**
**असदधिकरणसुधायाः प्रतिवादिमतेनैव प्रवृत्तत्वसमर्थनम्**

अभिप्रेतं चेदं कर्तृत्वस्य बुद्धिघटितत्वं श्रीमदाचार्याणाम् । **"विमतं सकर्तृकम् इत्यत्र सर्वज्ञत्वस्य पक्षधर्मताबलेन सिद्ध्यङ्गीकारादि**"ति स्पष्टं **प्रमाणलक्षणे** कथनात् ।

अत एव "यद्यपि कार्यत्वं सकर्तृकत्वमात्रेण व्याप्तं तथापि भूभूधरादिपक्षधर्मताबलेन सर्वज्ञमेव कर्तारं गमयति । **उपादानादिविषयज्ञानवत एव कर्तृत्वादि**"ति तट्टीकायां व्याख्यातम् ।

अत एव **सन्न्यायरत्नावली**वाच्यपि बुद्धिघटितमेव कर्तृत्वं प्रदर्शितमित्यवाच्येव ।

अत एव **तत्वनिर्णयटीकायां** सकर्तृकम्– **उपादानविषयकबुद्धिमत्पूर्वकमि**ति व्याख्यातम् ।

अत एव **तत्त्वोद्योतटीकायामपि**– "न हि क्षित्यादिकर्तृताव्यतिरिक्तमीश्वरत्वं सिषाधयिषितम्। यदर्थं पुनरारम्भो भविष्यति। **सर्वज्ञत्वादेरपि तदन्तर्भावादि**" त्युक्तम्।

अत एव **शास्त्रयोनित्वाधिकरणीयसुधायां**– "क्षित्यादीनां कर्तेत्येतदन्तर्गतमेव सर्वज्ञत्वादिकं न यत्नान्तरमपेक्षते। **निमित्तोपादानफलाद्यभिज्ञस्य तदनुगुणेच्छा-प्रयत्नवत एव कर्तृत्वादि**"त्युक्तम्।

अत एवासदधिकरणीयचन्द्रिकायामपि **"न तृतीयादियोगित्वं कर्तृतेह विवक्ष्यते। किन्तु ज्ञानादियोगित्वं तच्चाभावे न युज्यते।"** इति ज्ञानघटितमेव कर्तृत्वं सिद्धान्तरीत्या व्यासराजतीर्थश्रीमच्चरणैः प्राकाशि।

तथाच सिद्धान्ते कर्तृत्वस्य बुद्धिघटितस्यैव स्वीकारादसदधिकरणीयसुधा प्रतिवाद्यादिमतेनैव प्रवृत्तेति बोध्यम्।

**कर्मनिर्णये बुद्धिघटितकर्तृत्वाङ्गीकर्तृमायावादिन एव प्रतिवादित्वेनास्य परमतानुसारेण प्रवृत्तेरनाशङ्कनीयत्वप्रदर्शनम्**

न चात्रापि प्रतिवादिमतानुसारेण बुद्धिपूर्वमिति विशेषणमिति वाच्यम्। प्रकृते प्रतिवादिभिर्मायावादिभिर्बुद्धिघटितस्यैव कर्तृत्वस्याङ्गीकारात्[१]। अपरब्रह्मणि

---

१ ब्र.सू.शां.भा.जन्माद्यधिकरणे– अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः **सर्वज्ञात्** सर्वशक्तेः कारणाद्भवति तद्ब्रह्मेति वाक्यशेषः।

भामती– अत्र नामरूपाभ्यां व्याकृतस्येति चेतनभावकर्तृकत्वसम्भावनया प्रधानाद्यचेतनकर्तृकत्वं निरुपाख्यकर्तृकत्वं च व्यासेधति। यत् खलु नाम्ना रूपेण च व्याक्रियते तच्चेचनकर्तृकं दृष्टं यथा घटादि। विवादाध्यासितं च जगन्नामरूपव्याकृतं तस्माच्चेतनकर्तृकं सम्भाव्यते। चेतनो हि **बुद्धावालिख्य** नामरूपे घट इति नाम्ना रूपेण च कम्बुग्रीवादिना बाह्यं घटं निष्पादयति। अत एव घटस्य निर्वर्त्यस्याप्यन्तःसङ्कल्पात्मना सिद्धस्य कर्मकारकभावो घटं करोतीति। यथाहुः –

कुलालादौ च बुद्धिघटितकर्तृत्वस्याङ्गीकारेऽपि शुद्धे ब्रह्मणि तादृशस्यानङ्गीकार इति चेत्। कस्तव लाभः?। प्रत्युत शुद्धब्रह्मणि बुद्धिघटितकर्तृत्वस्याभावेन स्वरूपासिद्धिर्दृढीकृता।

**कर्तृत्वस्य बुद्धिघटितत्वे प्रकृत्यधिकरणानुव्याख्यानविरोधमाशङ्क्य समाधानपरसुधाशयवर्णनपूर्वकं कर्मनिर्णयप्रसङ्गस्य वैषम्यप्रदर्शनम्**

अथापि स्यात्। "**अपादानतया विश्वकर्तृत्वं बुद्धिपूर्वकम्। उक्तं भाल्लविशाखायां ब्रह्मतर्के च सादरमि**"ति प्रकृत्यधिकरणीयानुव्याख्याने कर्तृत्वं बुद्धिपूर्वकत्वेन विशेषितम्। तेन कर्तृत्वं बुद्ध्यघटितमिति सिद्ध्यतीति। न स्यात्। सुधैव समाधत्त यतः।

सुधा- "**तथापि बुद्धिपूर्वकमिति व्यर्थम्। कर्तुर्बुद्धिमत्त्वनियमादिति। मैवम्। अशेषविशेषज्ञानस्य विवक्षितत्वादि**"ति।

अयमाशयः। यद्यपि कर्तृत्वान्तर्गततया बुद्धिमत्त्वमलाभि। तथापि न कुलालादिसाधारणं सामान्यज्ञानमेव भगवति, किन्त्वशेषविशेषज्ञानमपि भगवन्त-मलङ्करोतीति ज्ञापयितुं बुद्धिपूर्वकमिति विशेषणम्। व्यर्थं सत्किञ्चिज्ज्ञापयतीति न्यायात्। तथा च कुलालादिविलक्षणं भगवतो जगत्कर्तृत्वं निरूपयितुं तत्र विशेषणं सार्थकमिति।

नचात्रापि तथैवास्त्विति वाच्यम्। निर्गुणतानिराकृतेरेवात्र प्रस्तावात्। सामान्यज्ञानघटितकर्तृत्वसिद्धावपि निर्गुणत्वं पलायते हि।

---

बुद्धिसिद्धन्तु न तदसदिति। तथाचाचेतनो बुद्धावनालिखितं करोतीति न शक्यं सम्भावयितुमिति भावः।

**अनुव्याख्यानप्रसङ्गतौल्यात्, विपक्षे बाधकप्रदर्शनपूर्वकं बुद्धिघटितत्वस्यैव अङ्गीकार्यत्वप्रतिपादनम्**

ननु प्रथमसूत्रगतब्रह्मशब्दोक्तगुणपूर्णत्वसम्भावकत्वेन जन्मादिसूत्रे कर्तृत्वमुपक्षिप्तम्। तत्र विप्रतिपत्तावसदधिकरणे गुणपूर्णत्वसम्भावकं कर्तृत्वं "**बुद्धिपूर्वप्रवृत्तिर्हि**"ति निरुक्तमिति [१]प्रासङ्गिकमिति चेत्। तर्हि प्रकृतेऽपि तदाशयानुसारेण गुणपूर्णत्वसमर्थनायैव कर्तृत्वरूपयुक्तेरुपन्यासात् कर्तृत्वस्य बुद्धिपूर्वप्रवृत्तिरूपत्वमेवोररीक्रियेतानुव्याख्यानोक्तम्। न तु गीतातात्पर्यनिर्णयोक्तम्।

अन्यथा[२] सर्वत्र बुद्धिपूर्वमिति कर्तृत्वं विशेषणीयं स्यात्। न चैवमस्तीति पूर्वमेवाभिहितम्। अत एव '**कर्तृत्वात्सगुणं ब्रह्मे**'ति भागवतेऽपि न भागवत्ता[३] बुद्धिपूर्वमिति विशेषणस्य। तदुदाहरन्तश्श्रीमदाचार्याः कर्तृत्वं मुख्यमेवात्र विवक्षाञ्चक्र इति प्रातिष्ठिपन्।

एतेन "यच्चोक्तं[४] सर्वकर्तृत्वं जडेऽपि गतमिति 'सार्वज्ञादिकं सर्वकर्तृत्वान्तर्गतमिति साध्याविशिष्टते'ति तु न प्रसरत्येवे"ति तदपि निरस्तम्। इयता महता प्रबन्धेन मुख्यस्यैव कर्तृत्वस्याचार्याभिप्रेतत्वस्य समर्थितत्वात्। निरूपयिष्यते चेदमग्रे।

---

१ अपि च प्रथमसूत्रे ब्रह्मशब्दोक्तगुणपूर्णत्वसम्भावकत्वेन जन्मादिसूत्रे कर्तृत्वमुपक्षिप्तम्। तत्र विप्रतिपत्तावसदधिकरणे गुणपूर्णत्वसम्भावकं कर्तृत्वं निरुक्तमिति प्रासङ्गिकमिति न व्याहतभाषित्वं तत्ववादाचार्यस्य। खं.चं.पा.वा.-२३४

अभ्युपेत्य च प्रासङ्गिकत्वमयं पक्षो दूष्यते। वस्तुतत्त्वं तु सूत्रभाष्यानुभाष्यादीनि तद्व्याख्यानानि च प्रेक्षमाणानां प्रेक्षावतां सुगममेवेति न पुनस्तदत्र विशद्यते। गीतातात्पर्ये च जगदात्मना विकाररूपं कर्तृत्वमुक्तमिति चाभ्युपेत्येदमुक्तम्।

२ गीतातात्पर्योक्तस्य विकाररूपकर्तृत्वस्यापि मुख्यत्व इत्यर्थः।

३ भागोऽस्यास्तीति भागवान्,तस्य भावो भागवत्ता।

४ "सर्वकर्तृत्वं जडेऽपि गतमिति 'सार्वज्ञादिकं सर्वकर्तृत्वान्तर्गतमिति साध्याविशिष्टते'ति तु न प्रसरत्येव"। खं.चं.पा.वा-२३४

### बुद्धिघटितकर्तृत्वस्य मुख्यस्यैव विवक्षितत्वे पूर्वोक्तातिव्याप्तिशङ्कासमाधानयोरप्रसक्तिमाशङ्क्य तयोरभ्युपेत्यवादेन प्रवृत्तत्वकथनम्

ननु मुख्यमेव कर्तृत्वं यदि विवक्षाविषयताभाजनं तर्ह्यदृष्टद्वारा कर्तृत्वमादाय जीवेष्वतिव्याप्तिरेव न प्रसक्तिगोचरः। अदृष्टद्वारा कारणत्वेऽपि तेषां कार्यकारक-क्रियाफलाभिज्ञानतदिच्छाप्रयत्नपूर्वकस्पन्दरूपकर्तृत्वाभावादेवातिव्याप्तेर्निरसना-दिति चेत्। सत्यम्। अभ्युपेत्यवादेन पूर्वमदृष्टद्वारा बहुतरकर्तृत्वेऽपि न सर्वकर्तृत्वं जीवानामित्यवोचाम। वस्तुतस्तु कुलालादिजीवानां घटादिकतिपयनिरूपितमुख्य-कर्तृत्वेऽप्यदृष्टद्वारा बहुतरकारणत्वेऽपि बहुतरकर्तृत्वं नैवास्ति। सर्वकर्तृत्वं तु दूरतोऽपास्तमित्येव सिद्धान्तः।

### बुद्धिपूर्वं सर्वकर्तृत्वादिति हेतोः श्रुतिसिद्धत्वेऽनुमेयाभावकथनपूर्वकं दार्ढ्याय युक्तिरिति पक्षस्य साध्याविशिष्टतोद्भावनेन निराकरणम्

यो हि ब्रह्म निर्गुणं मन्यते स कथं तस्य बुद्धिपूर्वं सर्वकारणत्वं मन्येत। 'स तपस्तप्त्वा, इदं सर्वमसृजते'त्यादिश्रुत्या हेतुसिद्धिरिति चेत्तर्हि हेतुसिद्धावेव सगुणत्वसिद्धेरनुमेयाभावः। सगुणत्व एव हि विवादः। कर्तृत्वमपि ज्ञानादिगुण-घटितमेव। तथा च कर्तृत्वसिद्धौ सगुणत्वमेव सिद्धमिति नास्ति साध्यम्[१]।

किञ्च यदवोचद्[२]'भागवतोक्तमेवात्र निर्दिष्टमिति न स्वरूपासिद्धेरवकाशोऽ-स्ती'ति तदपि, भागवतेनैव सगुणत्वमप्यागतमिति टीकाकृत्पादोक्तानुमेयत्वा-भावरूपदूषणलङ्घने न जङ्घालम्।

---

१ यद्यपि सिद्धसाधनता न स्वार्थानुमाने दोषः। परार्थानुमानेऽप्यपक्षत्वापादकतया न दोषः। अनुमितिविषयः पक्ष इति सिद्धान्तेऽभ्युपगमात्। तथापि परार्थानुमाने "सिद्धसाधकोऽसङ्गत" इति प्रमाणलक्षणोक्तरीत्याऽसाङ्गत्यापादकतया दोष एव।

२ भागवतोक्तमेवात्र निर्दिष्टमिति न स्वरूपासिद्धेरवकाशोऽस्ति। खं.चं.पा.वा.-२३४

ननु श्रावयतु श्रुतिस्सगुणत्वमथापि युक्तिर्दार्ढ्यं प्रापयति तस्यैवेति को दोष इति चेदत्रेदं बोद्धव्यम्। श्रुत्या सिद्धं कर्तृत्वं हेतूक्रियते चेद् दृढमेव सिद्धमित्यङ्गीकुर्याः। अपरथा सन्दिग्धासिद्धिः प्रादुःष्यात्। अतो मा दार्ढ्यार्थं युक्तिमुखं निरीक्षिष्ठाः। अथ श्रुतिसिद्धे दृढेऽपि सगुणत्वेऽतिदार्ढ्याय युक्त्युक्तिर्युक्तेति मन्यसे तर्हि मृग्यतां साध्यादन्या युक्तिः। न तु साध्याविशिष्टा। प्रकृते कर्तृत्वरूपा युक्तिरेव सगुणत्वरूपसाध्यात्मिका। सैव श्रुतिसिद्धा। तयैव कर्तृत्वरूपयुक्त्या सगुणत्वं साध्यते चेन्न दार्ढ्यं लभ्यते। श्रुतिसिद्धत्वे यावान् लाभो न ततोऽधिकः प्राप्तः।

**उक्तसाध्याविशिष्टतायाः सामान्यविशेषभावेनासम्भवमाशङ्क्य सत्यपि तस्मिन्, "वृक्षः शिंशुपात्वा"दित्यस्मात् प्रकृतहेतोर्विलक्षणतया साध्याविशिष्टताया दुर्वारत्वसमर्थनम्**

ननु कथं साध्याविशिष्टता वृक्षत्वशिंशुपात्वयोरिव सामान्यविशेषभाव-सद्भावादिति चेत्। सत्यम्। तथापि विशेषः कश्चन दृश्यते।

तथा हि- पुरोवृत्तिपदार्थे वृक्षो वा घटो वेति विशये, वृक्षः शिंशुपात्वादिति शिंशुपात्वरूपविशेषेण सिद्धेन वृक्षत्वरूपसामान्यमसिद्धं साध्यते। वृक्षत्वशिंशुपा-त्वयोर्धर्मयोर्भिन्नत्वात् (सविशेषाभिन्नत्वात्)। प्रकृते यत्किञ्चिद्गुणवत्त्वरूपसगुण-त्वस्यैव साध्यत्वेन कर्तृत्वस्यापि यत्किञ्चिद्गुणघटितत्वेन साध्यरूपत्वात् साध्याविशिष्टताऽपरिहार्या।

ननु कथं तर्हि भवता साध्यते ? न मया साध्यते कर्तृत्वेन सगुणत्वम्। सर्वकर्तृत्वान्तर्गततयैव सर्वज्ञत्वादिगुणवत्त्वं सिद्ध्यतीत्युच्यते।

### ग्रन्थप्रकृतक्रमनिरूपणेन पूर्वपक्षिणः सगुणत्व एव विवाद इति प्रदर्शनपूर्वकं ब्रह्मणोऽनन्तगुणत्वानुमानस्याप्रसक्तत्वसमर्थनम्

यदन्यदुक्तं[१]"सगुणत्वे हि विवादप्रसक्तिः नत्वनन्तगुणत्वेऽतोऽप्रसक्तभाषण-मिदमनन्तगुणसिद्ध्यर्थमनुमानमिति तु "अतोऽनन्तगुणो भगवान्नारायण इति सिद्धमि"ति भाष्यविरुद्धमिति नादर्तव्यमि"ति। नादर्तव्यं तत्।

तथाहि- अत्रायं क्रमः- "महद्धि तत्परं ब्रह्म। अशेषगुणसम्पूर्तेः"। इति श्रीमदाचार्याः प्रतिजज्ञिरे। ततः "तत्रैक आहुरगुणं ब्रह्मेति" पूर्वपक्षमन्ववादिषुः।

अनेनेदं स्फुट्यभवन्न सगुणत्वं स्वीकृत्याशेषगुणपूर्णत्वमाचिक्षिपुः पूर्वपक्षिणः किन्तु सगुणत्वमेवेति। सगुणत्वमेव तर्हि साधनीयतामीप्सतीति निर्गुणत्वमेव "**न तद्युक्तमि**त्यत्र तत्पदेन परामृश्य न युक्तमिति निषिध्य तत्र **श्रुतियुक्तिविरोधादि**ति हेतुमभिधाय **तथाही**त्यादिना श्रुतियुक्ती प्रदर्शयाञ्चक्राते इति।

तथा च पूर्वपक्षिभिरुक्तस्यागुणत्वस्य निराकृत्यै सगुणत्वमेव श्रुतियुक्तिभ्यां साधनीयम्। साधिते च सगुणत्वे निर्गुणत्वरूपबाधकाभावात् प्रागशेषगुणसम्पूर्ते-र्ब्रह्मणो महत्त्वं यदुक्तं तत्साधिष्ठमेवेति "**अनन्तगुणो भगवान् नारायण इति सिद्ध-मि**"त्युपसञ्जह्रुः, न त्वनन्तगुणत्वं युक्त्या[२] साधयामासुः। अनन्तगुणत्वप्रतिपा-दिकाश्श्रुतीरपि सगुणत्वसमर्थनायैवोदाहार्षुरिति टीकोक्तं सर्वमतिनिर्दुष्टमिति सिद्धम्॥

**॥ इति बुद्धिपूर्वविमर्शः ॥**

---

१ सगुणत्वे हि विवादप्रसक्तिः नत्वनन्तगुणे अतोऽप्रसक्तभाषणमिदमनन्तगुणसिद्ध्यर्थमनुमानमिति तु "**अतोऽनन्तगुणो भगवान् नारायण इति सिद्धमि**"ति भाष्यविरुद्धमिति नादर्तव्यम्। खं.चं.पा.वा.-२३४

२ यदि चानन्तगुणपूर्णत्वमनया युक्त्यापि साधयामासुरित्यङ्गीक्रियते तदा बुद्धिपूर्वमितिविशेषणवैयर्थ्य-स्यानुमानप्रयोक्तुरकुशलत्वस्य च प्रसङ्गादिति भावः।

# अथ मुख्यवृत्तिविमर्शः

**कर्मनिर्णयः :- न चैवमादिवाक्यानां स्वार्थे प्रामाण्याभावः। सिद्धार्थे प्रामाण्यस्य साधितत्वात्। अविरोधाच्च। न च बह्वर्थेषु तात्पर्यकल्पने कल्पनागौरवम्। वचनेनैव प्रतीयमानत्वादर्थस्य कल्पनाभावात्। न च वाचनिकार्थस्तात्पर्यार्थ इति विशेषः। तन्मानाभावात्॥**

**कर्मनिर्णयटीका**- एवमर्थवादानामपि स्वार्थे प्रामाण्यमङ्गीकृत्यैतानि वाक्यानि व्याख्यातानि। ये पुनर्मीमांसका "वायुर्वै क्षेपिष्ठा देवते"त्यादीन्यर्थवाद-वाक्यान्युदाहृत्य नैतानि स्वार्थे प्रामाण्यमश्नुवते किन्तु नियोगापरपर्यायकार्य एव इति निर्णीतवन्तः, तन्मतं दूषयति- **न चेति**। तथाहि किं सिद्धेऽर्थे वाक्यस्य प्रामाण्याभावादर्थवादानां च स्वार्थास्सिद्धा एवेति तेषां तत्र प्रामाण्याभावः कल्प्यते? किं वा "नेच्छन्दसां कृच्छ्रादवपद्यै" इति व्यतिषक्तशंसनस्य पापहेतुत्वमुच्यते। "अथ यः पाप्मानमपजिघांसुः स्यादि"ति पापनिवृत्तिहेतुत्वमुच्यते। एवमन्यत्रापीति परस्परं प्रमाणान्तरेण च विरोधात्? अथवा पराङ्गभूतत्वादेषां शंसनादिकर्तव्यतायां तात्पर्यं तावदवश्यमङ्गीकार्यम्। स्वार्थेऽपि तात्पर्याङ्गीकारे कल्पनागौरवप्रसङ्गात्? उताऽऽम्नायस्य पुरुषप्रयोजनार्थं प्रवृत्तस्य क्रियायामेवानुष्ठानयोग्यायां बोधितायां प्रयोजनं भवति न सिद्धेऽर्थ इति क्रियार्थत्वादर्थवादानां चातदर्थानामानर्थक्य-प्रसङ्गात्? यद्वा क्रियायामेव प्रतिपादितायां वाक्यस्य पर्यवसानात्तद्रहितानामा-काङ्क्षितापूर्त्या वाक्याभासत्वापातात्? अथवा वायुक्षेपिष्ठत्वादीनां प्रमाणान्तर-प्राप्तत्वेनानधिगतार्थत्वाभावात्? आद्यं दूषयति **सिद्धार्थ इति**। द्वितीयमपाकरोति- **अविरोधाच्चेति**। "नेच्छन्दसामि"त्यादौ यथा न विरोधस्तथोक्तम्। एवमन्यत्रापि विरोधाभावो द्रष्टव्यः। तृतीयं प्रतिषेधति- **न चेति**। बह्वर्थेष्वित्यनेकत्वोपलक्षणम्।

कुतो नेत्यत आह- **वचनेनैवेति**। कल्पनायां हि गौरवम्। न चानेकार्थत्वं कल्प्यते। किन्तु प्रमितमेव। शंसनादिकर्तव्यतार्थत्वं तावत्परेणाङ्गीकृतम्। स्वार्थश्च वचनेनैव प्रतीयते। न ह्यस्य शब्दस्यायमेवार्थ इत्यत्र प्रतीतिमपहाय प्रमाणान्तरमस्ति। शब्दानुशासनादीनां च सैव मूलम्। अत एवाहुः "प्रयोगमूलं हि व्याकरणमि"ति। तदेवं स्वार्थस्य वचनेनैव शब्दशक्त्यैव प्रतीयमानत्वेन कल्पनाभावान्न कल्पनागौरवम्। अत्र सर्वत्र वचनशब्देन शब्दशक्तिमात्रमुच्यते। न तु मुख्या शक्तिरित्यवधेयम्।

नन्वसङ्गतमेतत्। न हि वयमर्थवादानां स्वार्थो वाचनिको न भवतीति ब्रूमः। किन्त्वनेकत्र तात्पर्यकल्पने कल्पनागौरवप्रसङ्गात्तात्पर्यार्थो न भवतीति। तत्र वचनेनैव प्रतीयमानत्वोक्तेः कोऽवसरः? इत्यत आह- **न चेति**। स्यादेवम्। यदि शब्दशक्तिविषयादन्यस्तात्पर्यार्थो नाम स्यात्। न चैवम्। किन्तु तत्परमुद्देश्यं शब्दशक्तिगोचरो यस्य तत् तत्परं तस्य भावस्तात्पर्यं तस्य विषयस्तात्पर्यार्थ इति शब्दशक्तिगोचर एवोच्यते। कुत इत्यत आह- **तदिति**। द्विविधा हि शब्दशक्तिः, मुख्यामुख्यभेदात्। मुख्या द्विविधा, योगरूढिभेदात्। तथाऽमुख्यापि लक्षणा गौणीति। एतद्विषयो वाचनिक इत्युच्यते। एतद्व्यतिरिक्तायां तात्पर्यवृत्तौ तद्विषये च मानाभावात्। अन्विताभिधानाङ्गीकारेण वाक्यार्थप्रतीतेरलिङ्गत्वात्। अभिहितान्वयवादिभिरपि वाक्यार्थस्य लाक्षणिकत्वाङ्गीकारादिति॥

**कर्मनिर्णयः :- यत्र वाचनिकार्थादन्यस्तात्पर्यार्थः प्रतीयते लौकिकवाक्येषु न तत्र साक्षाद्वचनं बोधकम्। वचनलिङ्गानुमा हि सा। विरोधादमुख्यवृत्तिर्वा। आप्तत्वनिश्चये। आप्तत्वानिश्चये प्रामाण्यमेव न भवति।**

**कर्मनिर्णयटीका** :- ननु विषं भुङ्क्ष्व, गङ्गायां घोषः, अग्निर्माणवक इत्यादेः प्रयोगान्निषिद्धान्नभोजनवर्जनादिरूपो वाचनिकार्थादन्यस्तात्पर्यार्थः प्रतीयते । किञ्च श्वेतो धावतीत्यादिवाक्यादनेकवाचनिकार्थप्रतीतावपि तात्पर्यार्थ एक एवाङ्गीक्रियते । तत्कथं वाचनिकार्थातिरिक्ततात्पर्यार्थे मानाभाव इत्यत आह- **यत्रेति** । यत्रोदाहृतेषु लौकिकवाक्येषु वाचनिकार्थादन्यस्तात्पर्यार्थः प्रतीयत इति मन्यसे तत्र तस्यार्थस्य वचनं साक्षाच्छब्दप्रमाणतया बोधकं न भवति । किं तर्हि? न त्वकरणिका प्रतीतिरुत्पद्यत इत्यत आह- **वचनेति** । सा निषिद्धभोजनवर्जनादिविषया प्रतीतिर्वचनलिङ्गकानुमा अतो नाकरणिकेति । किमुक्तेषु सर्वेषूदाहरणेष्वेवमेव ? नेत्याह- **विरोधादिति** । मुख्यार्थाङ्गीकारे प्रमाणविरोधात्तत्र लक्षणा गौणी वाऽमुख्या वृत्तिराश्रीयते । विरोधादिति पूर्वत्रापि सम्बध्यते । किमनुमितौ विरुद्धवचनमात्रं लिङ्गं तथा मुख्यार्थविरोधमात्रं किममुख्यवृत्त्याश्रयणे कारणमित्यत आह- **आप्तत्वेति** । उभयमपि वक्तुराप्तत्वनिश्चये सति भवति । नोक्तकारणमात्रात् । किमाप्तत्वनिश्चयेनेत्यत आह- **आप्तत्वानिश्चय इति** । विरुद्धवचनमात्रस्य व्यभिचारित्वेन लिङ्गत्वं न भवति । तथा (च) विरोधमात्रस्य भ्रान्त्यादिमूलत्वसम्भवेन तस्य वाक्यस्यामुख्यार्थप्रत्यायकत्वं न भवति । अत आप्तत्वनिश्चयोऽप्युपसङ्ख्येय इति ।

एतदुक्तं भवति । प्रथमोदाहरणे तावद्या निषिद्धभोजनवर्जनप्रतीतिरुपजायते सा शब्दजैव न भवति । कुतस्तत्र तात्पर्यवृत्तिकल्पना । किन्त्वयमिदानीं मह्यं क्रुद्धो वर्तते आप्तत्वे सति प्रमाणविरुद्धकर्तव्यतावादित्वात् । क्रोधश्चास्य सन्निहितान्निषिद्धभोजनादेव जातः । दृष्टकारणपरित्यागेनादृष्टकल्पनायोगात् । अतो मयेदं न कार्यमित्यस्याभिप्राय इति विशिष्टवचनलिङ्गेन वक्तुराशयोऽनुमीयत एव ।

एवं चतुर्थोदाहरणेऽप्येकार्थनियमनं न वचनसामर्थ्यजम्। तत्र कुतस्तात्पर्यवृत्ति-श्शब्दस्य कल्प्येत। किन्तु शब्दादर्थद्वयप्रतीतौ वक्तुराप्तत्वे सत्येकस्मिन्नर्थे प्रमाणविरोधं च प्रतीत्य नायमस्य विवक्षित इत्यनुमाय परिशेषाद् द्वितीयोऽ-ङ्गीक्रियते। द्वितीयोदाहरणे लक्षणाख्यवचनवृत्तिरेव। मुख्यार्थबाधादितद्बीज-दर्शनात्। तृतीयोदाहरणे च गौणी वचनवृत्तिः। वाच्यार्थविरुद्धत्वादितन्निमित्त-सद्भावात्। तदेवं यत्र शाब्दी प्रतीतिस्तत्रास्मदभिमतवृत्तिष्वन्यतमां व्युत्पादयामः। यत्र तदव्युत्पादनं तत्र शाब्दत्वं निराकुर्म इति न तात्पर्यवृत्तिरन्या सिद्ध्यतीति॥

**कर्मनिर्णयः– वेदवाक्यस्य तु वाचनिकार्थं विना नैवान्यो युज्यते॥**

**कर्मनिर्णयटीका:**– नन्वस्य न्यायस्य वेदेऽपि तुल्यत्वात् "लौकिकवाक्येष्वि"ति किमर्थम्? इत्यत आह– **वेदेति**। वाचनिकार्थं मुख्यामुख्यवृत्तिलभ्यार्थम्। अन्यः प्रकारः पुरुषाशयानुमानरूपः। अयमभिप्रायः। वेदोऽपौरुषेय इत्यस्माकं परेषां च यद्यपि सम्मतम्। तथापीश्वरवाक्यत्वं समस्तस्यापि वेदस्य वयमङ्गीकुर्मः। न परे। अतोऽस्मन्मते पुरुषाशयानुमानसम्भवेऽपि परमते तु स प्रकारो नैव युज्यते। अतः परमतानुवादपरे "यत्र वाचनिकार्थादि"ति वाक्ये लौकिक-वाक्येष्वित्युक्तमिति।

वेदेऽमुख्यवृत्तिरेव नास्तीति व्याख्यानं तु न बुध्यामहे। तथाहि– किं वैदिकानि गौणलक्षणाभिधाशक्तिमन्त्येव न भवन्तीत्यभिप्रायः? उत गौणस्य लाक्षणिकस्य वाऽर्थस्य वेदवाक्यार्थान्वयो नास्तीति? आद्ये लौकिकानां वैदिकानां च शब्दानां भेदाभावाद्वृत्तिभेदकथा वृथा स्यात्। न द्वितीयः। "हृद्यपेक्षया तु मनुष्याधिकारत्वादि"ति लक्षणायाः, "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवदि"ति गौण्याश्च वृत्तेः "अङ्गुष्ठमात्रः पुरुषः", "तत्त्वमसी"त्यादौ सूत्रकृताऽङ्गीकृतत्वात्।

तथैव भगवत्पादैर्व्याख्यातत्वात्। "तदन्तस्थत्वापेक्षत्वान्न सुषिरश्रुतिविरोधः" इत्यादिभाष्यविरोधाच्च। कथं च "स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि। सादृश्ये चैक्यवाक्सम्यक्सावकाशा यथेष्टत" इत्यादिकं व्याख्येयम्। न चैतत्सर्वं परमतरीत्योक्तमिति वाच्यम्। ज्ञापकाभावात्। अस्य तु वाक्यस्यान्यथा व्याख्यातत्वात्। किञ्च शास्त्रे सहस्रशो वाक्यानि गौर्णीं लक्षणां च वृत्तिमाश्रित्य प्रवृत्तानि। इदन्त्वेकम्। ततः "त्यजेदेकं कुलस्यार्थे" इति (ए)तदेवान्यथयितव्यम्। किञ्च "अस्माकं परमुख्यार्थ" इति स्वमतत्वेन "गौणाद्यं तदयोगत" इत्याद्यभिहितम्। नचैतत् पुराणादिविषयम्। "अजामेकामि"ति श्रुतिविचारे पुराणादेरप्रसङ्गात्। "अतो भेदवदेवैताः श्रुतयः प्रवदन्ति हि। पौराणानि च वाक्यानि सादृश्याभेदसंश्रयादि"त्यादौ व्यक्तमेव वचनाच्च। अस्तु तर्हीश्वरे गौण्याद्यभावपरमेतदिति चेत्। न। अङ्गुष्ठमात्रश्रुतेः सुषिरश्रुतेश्चेश्वर एव लाक्षणिकत्वस्योक्तत्वात्। "प्राज्ञवदि"ति "सर्वं खल्विदं ब्रह्मे"ति श्रुतेर्गौणत्वेन स्वीकृतत्वादित्यलम्। ननु तात्पर्यवृत्तेरभावे कथं कर्मकाण्डस्य ब्रह्मणि समन्वयः। न हि तत्रोक्तवृत्तिसम्भव इति चेत्। न। "ज्योतिरुपक्रमादि"ति पदसमन्वयस्योक्तत्वात्। वाक्यान्वयपक्षेऽप्यन्विताभिधानस्योक्तत्वेन समाधानादिति संक्षेपः ॥

# कर्मविजयः

**नच वाचनिकार्थस्तात्पर्यार्थ इति विशेष इति आचार्यवाक्यस्य वाचनिकपदघटकवचनपदस्य टीकाकृदभिप्रेतार्थवर्णनपूर्वकं खं.चं.काराभिप्रेतार्थस्य दूषणोपक्रमः**[१]

अर्थवादानां प्राशस्त्यमात्रे तात्पर्यं न स्वार्थ इति पूर्वपक्षे सति स्वार्थेऽपि तात्पर्यं वरीवर्तीति विवरीतुं प्रावर्तिष्ट **"न चैवमादिवाक्यानामि"**त्यादि वाक्यजातम्। तत्र **"न च वाचनिकार्थस्तात्पर्यार्थ इति विशेषः। तन्मानाभावादि"**त्यत्र वाचनिकशब्दघटकवचनपदेन [२]शब्दशक्तिमात्रमुच्यते न मुख्या शक्तिरिति टीकाकृत्पादा अभिप्रयन्ति। कैश्चित्तु वचनशब्देन [३]मुख्यवृत्तिरेवाग्राहि। न तन्मनोग्राहि। गङ्गायां मीन इत्यत्र गङ्गाशब्दस्य शक्यार्थे प्रवाहे यथा तात्पर्यं स्वीक्रियते तथैव गङ्गायां घोष इत्यत्र गङ्गाशब्दस्य लक्ष्यार्थे तीरे, पतिव्रतायां प्रयुक्तस्य गङ्गाशब्दस्य गौणार्थे पावित्र्येण गङ्गासदृश्यां स्त्रियि च तात्पर्यं स्वीक्रियते। तथा च तात्पर्यार्थो न केवलं शक्यार्थः, किन्तु लक्ष्यार्थो गौणार्थोऽपीति

---

१ इदं चात्रादाववश्यमवधेयम्। **नच वाचनिकार्थस्तात्पर्यार्थ इति विशेष** इत्यारभ्य **वेदवाक्यस्य तु....** इतिपर्यन्तमेकमपि वाक्यं सावतरणं सुसङ्गतं वा न व्याख्यायि तैः। न वैकस्यापि पदस्यार्थः, तत्कृत्यं वा स्पष्टं निरूपितम्। न वा तेषां वाक्यानामर्थः स्पष्टं निरूपितः। अत एव नास्माभिर्विमर्शविस्तरः कृतः। अथापि बहुधा तद्वाक्यावलोकने सति प्रतीतस्सम्भावितोऽर्थः शिष्यमनोमालिन्यनिरासार्थं किञ्चिदिवात्र निराक्रियत इति।

२ पदे हि तात्पर्यरूपमर्थप्रतिपादकत्वं यदस्ति सा वृत्तिरित्युच्यते। प्रतिपादकत्वं नाम प्रतिपत्तिजनकत्वम्(न्या.दीपे) प्रतिपत्तिजननशक्तिरिति यावत्। सा वृत्तिरूपा शक्तिस्त्रिविधा। अभिधा गौणी लक्षणा चेति। तत्राद्या मुख्या, द्वितीयतृतीये त्वमुख्ये। अभिधा पुनस्त्रिविधा। योगो रूढिः योगरूढिश्चेति। तथा च वृत्तिरूपशक्तिः योगो रूढिः (योगरूढिः) गौणी लक्षणेति चतुर्विधा पञ्चविधा वा। तादृशवृत्तिरूपा मुख्यामुख्यसाधारणी प्रतिपत्तिजननशक्तिरेवात्र वचनशब्देन मूले विवक्षितेति शब्दशक्तिपदेन टीकाकृद्भिरुक्तम्। खं.चं.कारैस्तु वचनशब्देन मुख्यवृत्तिरूपा शक्तिरेव स्वीकृता न तु मुख्यामुख्यसाधारणी प्रतिपादकत्वशक्तिरिति विवेकः।

३ पाश्चात्ये वाके-२३५ 'खण्डार्थचन्द्रिकायान्त्वान्तं वाचनिकमिति मुख्यार्थमाहेति व्याचख्यौ मम गुरु'रिति कथनाद् तदीयव्याख्यानदर्शनेनापि तथाऽवगमादयं दोष उदभावि।

समपद्यत । सत्येवं **"न वाचनिकार्थस्तात्पर्यार्थ इति विशेष"** इति वाक्यस्थवाचनिक-पदप्रकृतिभूतवचनपदं केवलं शक्तिवृत्तिपरमिति कथं व्याख्यायते[१] ।

**बहूनां वाचनिकार्थानां तात्पर्यार्थेन निगमनमिति खं.चं.मतमनूद्य अप्रसक्तशङ्कासमाधनरूपत्वं तस्य दर्शयितुं प्रकृतपूर्वपक्षिमतमुक्त्वा तर्केण तद्दूषणम्**

नन्वत एव तैर्व्याख्यायि [२]"तात्पर्यार्थ एव हि वाचनिकोऽर्थः । यत्र बहवो वाचनिकार्थास्तत्र तात्पर्यार्थेनैव वाचनिकार्थो हि निगम्यत इति" इति चेत् । नेदं सङ्गच्छते । बहुषु वाचनिकार्थेषु कोऽर्थो ग्राह्य इति पूर्वं प्रश्नस्य प्रसक्तत्वे तदीयं व्याख्यानं सङ्गच्छेत । न प्रासज्ञि तथा प्रश्नः प्राक् । प्राशस्त्यं यदि वाचनिकार्थ इति मीमांसका अङ्ग्यकरिष्यन् तर्हि प्राशस्त्यमपि वाचनिकार्थः पापपरिहारकत्वादिलक्षणस्वार्थोऽपि वाचनिकार्थ इति तयोर्मध्ये को ग्राह्य इति प्रश्न उदभविष्यत् तदा यस्तात्पर्यार्थस्स एव वाचनिकार्थो गृह्येतेति निगमनं समगंस्यत । न च मीमांसकाः प्राशस्त्यं वाचनिकं मन्यन्ते किन्तु लक्ष्यमेव ।

**बहूनां वाचनिकार्थानामेकस्यैव तात्पर्यार्थेन निगमनमिति खं.चं.व्याख्याने शक्यार्थलक्ष्यार्थयोरुभयोरपि तात्पर्यार्थत्वप्रतिपादकमूलविरोधोद्भावनम्**

किञ्च न केवलं तदीयं व्याख्यानं न सङ्गच्छते किन्तु विरुणद्धि च मूलम् ।

---

१ नच वाचनिकार्थस्तात्पर्यार्थ इति विशेष इति मूलस्य मिथो वाचनिकार्थत्वतात्पर्यार्थत्वयोस्समनियता व्याप्तिरिति न लेशतोऽपि तयोः परस्परं भेदोऽभिप्रेत इति टीकाकृतः । अत एव तैश्शक्यलक्ष्यगौणार्थानां तात्पर्यार्थानां प्रतिपादकत्वरूपशक्तिप्रतिपाद्यार्थैर्वाचनिकार्थैस्सममभेद इत्यर्थपरतया वाक्यमिदं व्याख्यातम् । यदि मुख्यवृत्तिप्रतिपाद्यमात्रं वाचनिकार्थस्तर्हि लक्ष्यार्थगौणार्थयोरसङ्ग्रहात् तात्पर्यार्थत्वेन प्रसिद्धयोरनयोर्वाचनिकार्थेन सममभेदाभावात् 'न....विशेष' इति कथं वाचनिकार्थतात्पर्यार्थयोर्मिथोऽभेदो मूलाभिप्रेतस्सङ्गच्छत इति भावः ।

२ तात्पर्यार्थ एव हि वाचनिकोऽर्थः । यत्र बहवो वाचनिकार्थास्तत्र तात्पर्यार्थेनैव वाचनिकार्थो हि निगम्यत इति । खं.चं.१७८

तथाहि– "कल्पनागौरवं नास्ति। प्राशस्त्ये लक्षणया प्रमिते यथा तात्पर्यं प्रमीयते तथा शक्तिवृत्या प्रतीयमाने स्वार्थे तात्पर्यं प्रमीयत एवेति न किञ्चित्कल्प्यत इति कुतः कल्पनागौरवमिति" कथनार्थं प्रावर्तिषत कर्मनिर्णयकाराः। यद्यनेकेषु वाचनिकार्थेषु (शब्दार्थेषु) एक एवार्थो ग्राह्य इति निगमनप्रतिपादकतया प्रकृते व्याख्यानं क्रियेत तदा कथं न विरोधः[१]।

**स्वोक्तार्थे एव सकृदुच्चरितः... इति न्यायस्य प्रवृत्तिं, तस्य शास्त्रविषयत्वाभावं चाभिप्रयतः खं.चं.कारस्य व्याख्यानं प्रकृते शास्त्रप्रस्तावादसङ्गतमिति दूषणम्**

नन्वत एव "अत एवाऽभाणकः प्रवृत्तः "सकृदुच्चरितः शब्दः सकृदेवार्थं गमयती"ति। सकृदुच्चरितोऽनेकार्थः शब्दो यत्र वक्तुस्तात्पर्यं तमेकमेवार्थं गमयतीति व्याख्यायायं न्यायः लोकव्यवहारविषयः। न काव्यविषयः। नापि शास्त्रविषय"इत्यभिप्रायोऽकथ्यत तैः[२]। तथा च प्रकृते शास्त्रीयव्यवहारे वाचनिके स्वार्थे प्राशस्त्ये च तात्पर्यस्वीकारेऽपि न विरोध इति चेत्। न। एवं सति तदुक्तोऽर्थो न प्रकृतसङ्गतः। नेदानीं लौकिको व्यवहारः प्रास्तावि। नापि बहवो वाचनिकार्थाः (तदाशयानुसारेण मुख्यवृत्तिलभ्यार्थाः) प्रास्तूयन्त। स्वार्थस्य वाच्यत्वात् प्राशस्त्यस्य लक्ष्यत्वात्। तथा च स्वयमसङ्गतं व्याख्याय महदकौशलमापादितं भगवत्पादेषु।

---

१ एक एव हि तात्पर्यार्थ इति मीमांसकैरुक्तस्य निराकृत्यै, वचनेनैव प्रतीयमानानां बहूनामपि तात्पर्यार्थतेति वक्तुं प्रवृत्तस्याचार्यवाक्यस्य, एक एव तात्पर्यार्थ इति व्याख्याने कथं मूलविरोधो न स्यादिति भावः।

२ अत एवाऽभाणकः प्रवृत्तः "सकृदुच्चरितः शब्दः सकृदेवार्थं गमयती"ति। सकृदुच्चरितोऽनेकार्थः शब्दो यत्र वक्तुस्तात्पर्यं तमेकमेवार्थं गमयति.... एतेन ज्ञायते सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीत्ययं न्यायः लोकव्यवहारविषयः। न काव्यविषयः। नापि शास्त्रविषयः। खं.चं.१७८

### उक्तख्.चं.व्याख्यानस्य यथाश्रुतमूलपदाननुगुणताप्रदर्शनम्

न केवलमसङ्गतमयुक्तं च तदीयं व्याख्यानं पदाननुगुणत्वात्। "बहुषु वाचनिकार्थेषु तात्पर्यार्थो ग्राह्य" इति वाचोयुक्तिर्यद्यभविष्यत्तर्हि तदीयं व्याख्यानमनुगुणभावमभजिष्यत्। नास्ति तथा। बहुषु वाचनिकार्थेषु तात्पर्यार्थभूतो वाचनिकार्थ एव ग्राह्य इति व्याख्यानं तैः कृतम्। तेन वाचनिकार्था बहवस्तात्पर्यार्थ एक इति सामान्यविशेषभावोऽलाभि। सति सामान्यविशेषभावरूपे विशेषे, **न विशेष** इति कथं युज्यते।

ननु वृक्षः शिंशुपेति प्रयुज्यत इति चेत्। को नेत्याह। प्रयुज्यतामत्रापि वाचनिकार्थस्तात्पर्यार्थ इति। न तु **"इति न विशेष"** इति। न प्रयुञ्जते हि 'वृक्षः शिंशुपेति न विशेष' इति।

### श्रीमट्टीकाकृत्पादीयव्याख्यानस्य स्फुटाबाधितसङ्गतिमत्त्वप्रदर्शनम्

श्रीमट्टीकाकृत्पादीयव्याख्याने तु सङ्गतिस्स्फुटाऽबाधिता च।

तथाहि- प्राशस्त्ये स्वार्थे च तात्पर्यकल्पने कल्पनागौरवं पूर्वपक्षी उदबीभवत्। वचनेनैव प्रतीयमानत्वादर्थस्य कल्पना नावकाशमासादयतीति श्रीमदाचार्या न्यरूरुपन्। पुनस्सोऽशङ्किष्ट प्रतीयतां वचनेन स्वार्थः कुतस्तत्र तात्पर्यमहं स्वीकुर्यामिति। तदा समादधुर्भगवत्पादाचार्याः **"न च वाचनिकार्थ-स्तात्पर्यार्थ इति विशेष"** इति। योऽर्थो वचनात् प्रतीयते शक्त्या लक्षणया गौण्या वा स एव तात्पर्यार्थो भवति। वृत्तित्रयान्यतमसहकृतवचनप्रतिपाद्यादन्यस्तात्पर्यार्थ इत्यत्र नास्ति मानमित्यगादिषुः **"तन्मानाभावादि"**ति।

### लक्ष्यार्थगौणार्थयोरनुमेयत्वं, न तु शाब्दत्वमित्यभिप्रायस्य तयोश्शाब्दत्वप्रत्यायकानुव्याख्यानविरोधप्रदर्शनम्

लक्ष्यस्य गौणस्य चानुमेयत्वमेवाभ्युपगम्यते[1] न शाब्दत्वमिति चेत्, तर्हि व्यङ्ग्यस्यानुमेयत्वाङ्गीकारेण यथा व्यञ्जनावृत्तिः पृथङ् न परिगण्यते तथा लक्ष्यगौणयोरप्यनुमेयत्वे लक्षणावृत्तिगौणीवृत्ती अपि न परिगण्येयाताम्। परिगण्येते च ते ततो न तयोरनुमेयत्वमिति।

ननु कुत्र परिगण्येते ते इति चेत्, श्रूयताम् **"उपलक्षणा च गौणी च तिस्रः शब्दस्य वृत्तय"** इत्यनुव्याख्याने,**"तस्माद्विष्णौ परममुख्यवृत्तिरेव शब्दस्यार्थान्तरे तु मुख्यमात्रवृत्तिः, लक्षणावृत्तिः, गौणीवृत्तिरिति तिस्रो वृत्तयो भवन्ती"**ति सन्न्यायरत्नावल्यामपीति।

### लक्ष्यार्थगौणार्थयोरानुमानिकत्वमाचार्यैरेव प्रतिपादितमिति पूर्वपक्षिणो मतमुपन्यस्य यथाटीकमेव आचार्याशयस्य सुसङ्गतत्वप्रतिपादनम्

ननु **"यत्र वाचनिकार्थादन्यस्तात्पर्यार्थः प्रतीयते लौकिकवाक्येषु न तत्र साक्षाद्वचनं बोधकम्। वचनलिङ्गानुमा हि सा। विरोधादमुख्यवृत्तिर्वा"** इति श्रीमदाचार्या एव लक्ष्यार्थगौणार्थयोरानुमानिकत्वं प्रत्यपीपदन्। अस्माभिस्तस्य समर्थने को दोष इति चेत्। न। अयमाशयश्श्रीमदाचार्याणाम्। सर्वथा तात्पर्यवृत्तिरिति पृथङ् नास्ति। यत्र विषं भुङ्क्ष्वेत्यादौ निषिद्धभोजनवर्जनप्रतीतिरुपजायते तत्र सा शब्दजैव न किन्त्वानुमानिकीति कुतस्तत्र तात्पर्यवृत्तिकल्पना। गङ्गायां

---

१ यद्यप्यत्र तद्वाक्यावलोकन एवमर्थस्तदभिप्रेत इति तु न स्फुटं प्रतीयते। अथापि कस्याप्यर्थस्यात्र स्पष्टमकथनाद्, एवमर्थो यद्यभ्युपगम्यते तर्ह्येवायं दोषः कथित इति बोध्यम्। अत एव अभ्युगम्यते चेदित्युक्तम्। एतेन'अनुक्तोपालम्भोऽयमि'ति शङ्का परास्ता।

घोषः, अग्निर्माणवक इत्यत्र गङ्गातीरप्रतीतिरग्निसदृशप्रतीतिश्च लक्षणावृत्त्या गौणीवृत्त्या च सम्भवत इति तत्रापि न तात्पर्यवृत्तिः कल्पनीयेति।

### लक्ष्यार्थगौणार्थयोः शाब्दत्व एव 'विरोधादमुख्यवृत्तिर्वा' इतिमूलस्थ 'वा'शब्दस्य विवक्षितार्थे सङ्गतिसम्भवप्रदर्शनम्

एवंव्याख्यान एव **"विरोधादमुख्यवृत्तिर्वे"**ति व्यवस्थितविकल्पबोधक-वाशब्दघटितवाक्यं सङ्गच्छते। न तु लक्षणागौणीस्थलयोरप्यानुमानिकत्वपरतया व्याख्याने। ननु कथं तर्हि,**"आप्तत्वनिश्चये। आप्तत्वानिश्चये प्रामाण्यमेव न भवती"**ति वाक्यशेषेणानुमानिकत्वं प्रागुक्तसर्वस्थलेषु प्रतीयत इति चेत्। न। यत्र[१] वक्तुराप्तत्वं निश्चितं तत्रैवानुमानं वा कार्यममुख्यवृत्तिर्वा स्वीकार्या। आप्तत्वानिश्चये त्वप्रामाण्यमेव तस्य वाक्यस्याङ्गीक्रियेत। न त्वनुमानममुख्यवृत्तिर्वेत्येव वाक्यशेषस्य तात्पर्यं न तु सर्वत्रानुमानिकत्वस्वीकारे। तथा सति विरोधादमुख्य-वृत्तिर्वेत्यस्य वैयर्थ्यमलङ्कारस्स्यात्। गङ्गायां घोष इत्यादावमुख्यवृत्ति-स्स्वीकार्येत्यत्राप्तत्वंलिङ्गतयोपयुज्यताम्।तीराद्यर्थप्रतीतिस्तुवृत्तिसहकृतशब्दजैव।

### खं.चं.पक्षेपि 'विरोधादमुख्यवृत्तिर्वा'इत्यत्र वाशब्दस्य आशयान्तरेण वैयर्थ्याभावमाशङ्क्य तदाशयान्तरस्य विकल्पपूर्वकं दूषणम्

ननु न तत्पक्षेऽपि वाशब्दस्य वैयर्थ्यम्। [२]"यत्र सपदि बोधः तत्र नानुमा। किन्तु रूढलक्षणा वा गौणी वा वृत्तिरिष्यत इति" वाशब्दो व्यापारयाञ्चक्र इति चेत्। न। तत्र तावद् गौणीत्यरूढगौणी विवक्षितोत रूढगौणी। नाद्यः।

१ विषं भुङ्क्ष्वेत्यादावनुमानमेव। गङ्गायां घोष इत्यादावमुख्यवृत्तिरेव। परमुभयत्राप्याप्तत्वनिश्चयः कारणमिति भावः।

२ यत्र सपदि बोधः तत्र नानुमा। किन्तु रूढलक्षणा वा गौणी वा वृत्तिरिष्यते। खं.चं.१७९

लक्षणास्थल आनुमानिकत्वं स्वीकृत्य गौणीस्थले तत्त्यागे कारणानिरूपणात्[१]। न द्वितीयः। रूढगौणीरूढलक्षणास्थलेऽप्याप्तत्वनिश्चयोऽपेक्ष्यत एव। अत एव बालेन चित्रलिखितसिंहं निशाम्य सिंहोऽस्तीति व्याहारे भ्रान्तोऽयं बाल इत्येव भ्राजते निर्णयोऽभ्रान्तनां वृद्धानाम्। आप्तत्वाऽप्रत्ययात्। एवमेव राजाऽयं गच्छतीत्यत्राप्यप्रतीताप्तभावबालादिकर्तृकप्रयोगे। न तु रूढगौण्या रूढलक्षणया वा प्रयुक्तोऽयं शब्द इति मन्यन्ते। तथा च तत्राप्याप्तत्वनिश्चयलिङ्गक-तात्पर्यानुमितिव्यवधानमस्तीति सपदि बोधः कथमुक्तः।

**गौणीलक्षणास्थलयोर्वैषम्येन व्याख्याने बीजाभावप्रदर्शनपूर्वकं टीकाकृत्पादीयव्याख्यानमेव वचनभङ्ग्यन्तरेण आश्रितं भवतीति कथनम्**

ननु प्रतीते मुख्यार्थे तात्पर्यं न किन्तु तदतिरिक्ते तात्पर्यमित्येतावानंशोऽनुमानेन गम्यते। अमुख्यार्थविशेषप्रतीतिस्त्वमुख्यवृत्तिसहकृतशब्दजैवेति विवक्षया सपदि बोधः[२] कथित इति चेत्। सममेतद् गौणीलक्षणास्थलयोरपीति कुतो वैषम्येन व्याख्यानम्। अस्तु तत्राप्येवमेवेत्यङ्गीकारे गङ्गायां घोष इत्यादिषु सर्वत्रामुख्यवृत्तिः, विषं भुङ्क्ष्वेत्यादिषु ध्वनितार्थस्थलेषु चानुमानमित्यायात्। तदिदं टीकाकृत्पादीयं व्याख्यानमेवेति तदेव समञ्जसम्।

**सिंहावलोकनन्यायेन पुनः वाचनिकार्थशब्दस्य शक्यार्थमात्रपरत्वे बाधकप्रदर्शनपूर्वकं टीकापक्षे दोषाभावनिरूपणम्**

किञ्चास्मिन् प्रकरणे वाचनिकशब्दस्य केवलं मुख्यार्थपरत्व उत्तरत्र **"न च कारणं किञ्चिद्वाचनिकानां बहूनामप्यर्थानां त्यागे। प्रतीयमाने तु विरोधे तदन्योऽर्थः**

---

१ गङ्गायां घोष इत्यादावरूढलक्षणास्थले तीराद्यर्थप्रतीतेरानुमानिकत्वं स्वीकृत्य, अग्निर्माणवक इत्यादावरूढगौणीस्थले सदृशार्थप्रतीतेस्तत्त्यागे कारणानिरूपणादित्यर्थः।

२ सपदि बोध इत्यस्य कथञ्चित् पारिभाषिकतामुपेत्यैवं विकल्पितम्। वस्तुतस्त्वयुक्तमेवेति भावः।

**स्वीकार्यः । वाचनिक एवे**"त्यत्रापि मुख्यार्थ एव स्वीकार्यो न लाक्षणिकादिरमुख्यार्थ इति स्यात्। न चेष्टापत्तिरिति युक्तम्। अमुख्यार्थस्य तैरप्यभ्युपगमात्। यदि प्रतीयमाने तु विरोधे वाचनिक(तदाशयानुसारेण मुख्य) एवार्थस्स्वीकार्यस्तर्हि लाक्षणिकार्थगौणार्थयोर्दत्तजलाञ्जलिता स्यात्।

नन्वत्र वाचनिकार्थानां मुख्यवृत्तिलभ्यार्थानां बहूनां प्रसङ्गे, विरोधे सति विरुद्धं परित्यज्याविरुद्धः वाचनिक एव स्वीकार्य इति कथितम्। सर्ववाचनिकार्थस्वीकारे विरोधे भासमाने लाक्षणिकाद्यर्थोऽपि स्वीकार्य इत्याशय इति चेन्, न स शब्देन भासते वाचनिकशब्दस्य मुख्यवृत्तिमात्रपरत्वमिति तत्पक्षे। **"विरोधे तदन्योऽर्थः स्वीकार्यः वाचनिक एवे**"त्यवधारणविरोधात्।

टीकाकृत्पादपक्षे न कश्चन क्लेशः। वाचनिकशब्दस्य मुख्यामुख्यवृत्तिलभ्यार्थपरत्वात्। वाचनिकार्थस्यैकस्य प्रमाणविरुद्धत्वे तदन्यो विरुद्धादन्योऽविरुद्धोऽर्थो स्वीकार्यः। सोऽपि वाचनिक एव, अभिधागौणीलक्षणारूपवृत्तित्रयान्यतमसहकृतशब्दलभ्य एव। न तु तात्पर्यवृत्तिलभ्य इत्यर्थः।[१]

---

१ प्रसङ्गाद्‘विश्वस्मादिन्द्र उत्तर’इत्यादौ परस्परविरुद्धमुख्यार्थद्वयघटितस्थले ग्राह्यार्थनिर्णायकस्य भगवत्पादोदाहृतप्रमाणस्यार्थोऽत्र निरूप्यते। प्रथमप्रतीतस्य मुख्यार्थस्य प्रमाणविरुद्धत्वे तदविरुद्धो गौणार्थो वा लाक्षणिकार्थो वा गृह्यत इत्यत्र न विवादः। यत्र तु द्वयोरपि मुख्यार्थत्वं तत्र कथम्?। यस्य समभिव्याहृतपदार्थान्वयो विरुद्धस्स त्याज्यो, यस्याविरुद्धस्स ग्राह्य इति चेत्। न। द्वयोरपि परस्परविरुद्धत्वे कथम्?। तद्यथा-“विश्वस्मादिन्द्र उत्तर” इत्यत्रेन्द्रशब्देन विष्णुरूपं मुख्यार्थं स्वीकृत्य तस्य सर्वोत्तमत्वरूपेऽर्थ उक्त,इन्द्रशब्दस्य पुरन्दररूपो योऽपरो मुख्यार्थस्तत्सर्वोत्तमत्वरूपो योऽर्थो वाक्याल्लभ्यते तद्विरोधः। एवमेवेन्द्रशब्देन पुरन्दरं स्वीकृत्य तत्सर्वोत्तमत्व उक्ते विष्णुसर्वोत्तमत्वरूपो योऽन्यो मुख्यार्थस्तद्विरोधः। अनयोरपि यो मुख्यतरस्स ग्राह्य इत्यपि वक्तुं न शक्यते। योगरुढ्योरुभयत्र भावेन द्वयोरपि साम्यादित्याशङ्कां परिजिहीर्षन्तश्श्रीमदाचार्या आगममुदाजहुः- मुख्यार्थानां चेति। **“मुख्यार्थानां च सर्वेषां तारतम्यं च विद्यते। तत्रापि परमो मुख्यो वाच्योऽशेषरवैर्हरिः। तत्तन्मुख्याविरोधेन तदन्यार्थस्य सङ्ग्रहः। स्वतो मुख्यविरोधे तु त्याज्योऽन्योऽर्थोऽखिलेष्वपि। इति सर्वत्र नियमः शब्दार्थज्ञानभूमिषु”** इति। अयमस्यागमस्याशयः। न मुख्यार्थेषु सर्वेषु साम्यम्। किन्तु तारतम्यमस्ति। तत्रापि परममुख्यो हरिस्तदनन्तरमितरे

रमादयः क्रमश इति वस्तुस्थितिः। मुख्यार्थयोः परस्परं विरोधे तत्तदपेक्षया यो मुख्योऽर्थस्तदविरोधेनापरममुख्यार्थो ग्राह्यः। परममुख्यार्थविरुद्धोऽपरममुख्यार्थस्त्याज्यः। तद्यथा "विश्वस्मादिन्द्र उत्तर" इत्यत्रेन्द्रशब्दस्य, पुरन्दररूपापरममुख्यार्थस्य स्वतो मुख्येन विष्णुरूपेण परममुख्यार्थेन विरोधे पुरन्दररूपोऽर्थस्त्याज्य इति।

तत्र मुख्यविरोधेन तदन्यार्थस्य सङ्ग्रहः इति प्र.पाठः प्रामादिक इति बन्नञ्जे गोविन्दाचार्यैस्स्वसम्पादिते सर्वमूलपुस्तके व्यलेखि। अत्र प्रचलितपाठ इति कथनेनेदं वाक्यं टीकाकारैष्टिप्पणीकारैश्च परिगृहीतमिति न मन्तव्यम्। टीकायां वा टिप्पणीषु वाऽदर्शनात्। परम्परायां प्रचलितेषु बहुषु हस्तलिखितेषु [तच्चित्राणि अन्ते द्रष्टव्यानि पृ.१०२]"तत्तन्मुख्याविरोधेन" इति पाठस्यैव दर्शनाच्च।

अत्र केचित्तत्पाठसमर्थकाः :-"तत्र मुख्यविरोधेन तदन्यार्थस्य सङ्ग्रहः" इति पाठो यदि क्वचित्स्यात् तर्ह्यपि न तस्य प्रामादिकत्वम्। तथाहि योजनाअखिलेषु वाक्येषु शब्दार्थज्ञानप्रसङ्गेष्वेवं व्यवस्था। यत्र मुख्यार्थाङ्गीकारे प्रमाणविरोधस्तत्र तेनैव निमित्तेनाविरुद्धस्यामुख्यार्थस्य स्वीकारः। यत्र मुख्यार्थयोरेव परस्परविरुद्धत्वं, तत्र मुख्यार्थेष्वपि तारतम्यसत्त्वेन, स्वतः=स्वापेक्षया मुख्यार्थविरुद्धमपरममुख्यार्थं परित्यज्य यथासम्भवं परममुख्यार्थ एव ग्राह्य इति। अस्मिन्पाठे "पूर्वायोगे परग्रह" इति "तथाप्येतद्विरोधे तु तद्वाचित्वमपोद्यत" इतिप्रथमाध्यायचतुर्थपादीयानुव्याख्यानगतवाक्यद्वयोक्तप्रमेयद्वयमपि सङ्गृहीतं भवति।

"तत्तन्मुख्याविरोधेन तदन्यार्थस्यसङ्ग्रह" इति पाठे यद्यपि मुख्यार्थयोर्विरोधे कथं निर्णय इति प्रश्नस्योत्तरं लभ्यते। "तथाप्येतद्विरोधे तु तद्वाचित्वमपोद्यत" इत्यनुव्याख्यानाशयः "स्वतो मुख्यविरोधे तु त्याज्योऽन्योऽर्थोऽखिलेष्वपी"त्यनेन सङ्गृहीतः।"अविरोधे तु बह्वर्था एतन्मूलतया मता" इत्यनुव्याख्यानाशयस्तु "तत्तन्मुख्याविरोधेन तदन्यार्थस्य सङ्ग्रह" इति वाक्येन सङ्गृहीतः। तथापि "पूर्वायोगे परग्रह" इत्यनुव्याख्यानोक्तं प्रमेयं न सङ्गृहीतं भवति। नन्वसङ्ग्रहो गुण एव। मुख्यार्थयोर्विरोधे कथमिति प्रश्नस्यैव प्रसक्तत्वात्। मुख्यार्थविरोधे कथमिति प्रश्नस्यानुदितत्वात्। "द्वयोरपि मुख्यत्वादि"ति टीकयाप्येतदेव ज्ञायत इति चेत्। सत्यम्। तथाप्यखिलेषु (वाक्येषु) शब्दार्थज्ञानभूमिष्विति पदानां स्वारस्यानुरोधेन न केवलं मुख्यार्थयोर्विरोधप्रसङ्गे यो निर्णयस्तस्यैव वक्तव्यत्वं किन्तु मुख्यार्थविरोधप्रसङ्गेऽपि यो निर्णयस्तस्यापि वक्तव्यत्वं स्वीकर्तव्यम्। एवंसति"पूर्वायोगे परग्रह" इत्यस्यासङ्ग्रहो न गुणः किन्तु दोष एव। तर्हि टीकाकारैरवतरणिकायां कुतो नोक्तमिति न शङ्कनीयम्। मुख्यार्थविरोधेऽमुख्यार्थग्रहणं "प्रतीयमाने तु विरोधे तदन्योऽर्थः स्वीकार्य" इत्याचार्यवाक्येनैवालाभि। तत्र जिज्ञासाविशेषोऽपि नोदैत्। प्रसिद्धत्वादस्य न्यायस्य। तथा च, यद्यपि प्रमाणवचने मुख्यार्थविरोधे को ग्राह्य इति शङ्कायास्तथा मुख्ययोरेव विरोधे को ग्राह्य इति शङ्कायाश्च परिहारो दृश्यते। तथापि द्वितीयस्या एव शङ्काया उत्कटत्वात् तत्परिहारकतयैवावतारितं टीकाकारैरिति समाधानसम्भवादित्यभिप्रयन्ति।

**यत्र वाचनिकार्थादन्यः...इति वाक्यघटक"लौकिकवाक्येषु" इत्यस्य कृत्यमुक्त्वा, रूढियोगौ विना कश्चित्..., वेदवाक्यस्य तु वाचनिकार्थं...इति वाक्ययोः भिन्नविषयकत्वसमर्थनम्**

यच्च [१]"लौकिकवाक्येष्वियं व्यवस्थेत्युक्त्वा वैदिकव्यवहारे तु सर्वत्र मुख्यवृत्तिं स्वीकृत्यैवामुख्यवृत्तिरुपादीयते। न तु केवला लक्षणा गौणी चेत्यु'क्तं तद्यपि समञ्जसम्। अत्रोदाहृत"**रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेदि**"ति-ब्रह्मतर्कवचनस्य पृथगुपदेशाधिकरणीयतत्त्वप्रकाशिकायां [२]तथापिव्याख्यानात्। [३]तथापि पूर्वं "**यत्र वाचनिकार्थादन्यस्तात्पर्यार्थः प्रतीयते लौकिकवाक्येषु न तत्र साक्षाद्वचनं बोधकम्। वचनलिङ्गानुमा हि से**"त्यत्र लौकिकवाक्येष्विति किमर्थं प्रायुज्यतेति शङ्का भवति। तस्याः परिहारो विधीयेत। स चेत्थम्। यदि परमतानुवादपरे "यत्र वाचनिकार्थादि"ति वाक्ये "लौकिकवाक्येष्वि"ति नोच्येत तर्ह्यत्र वचनलिङ्गानुमेत्यमुख्यवृत्तिरिति कथ्यमानो द्विविधोऽपि परिहारो लौकिकवैदिकोभयविधवाक्यसम्बन्धीति विज्ञायेत। तन्मा विज्ञायि। स्वमते सर्वस्य वेदस्येश्वरोच्चरितवाक्यत्वेन पुरुषाशयानुमानरूपप्रकारस्य वेदे सम्भवेऽपि परमते न सम्भवति। परैरीश्वरवाक्यत्वानङ्गीकारात्।

तदिदमुक्तं "**वेदवाक्यस्य तु वाचनिकार्थं विना नैवान्यो युज्यते**"। वेदवाक्यस्य मुख्यामुख्यवृत्तिलभ्यार्थं विनाऽन्यः प्रकारः=पुरूषाशयानुमानरूपो नैव युज्यत

---

१ इयं लोकव्यवहारे व्यवस्था। अथ वैदिकव्यवहारप्रकारमाह। केवलोन्यः गौणलक्षणारूपः।...... इत्यादि खं.चं.१७९

२ केवलो योगः, केवला रूढिः,केवललक्षणा, केवलगौणी च वेदे नास्तीत्यर्थपरतया व्याख्यानादित्यर्थः।

३ अयं भावः। **वेदवाक्यस्य तु वाचनिकार्थं विना**....इत्यस्य, तदर्थ एवात्र प्रमाणतयोदाहृतत्वेन खं.चं. काराभिमतस्य **रूढियोगौ विना कश्चिन्नैवार्थो**.... इति ब्रह्मतर्कवचनस्य च योऽर्थः खं.चं.कारैरुक्तः, स ब्रह्मतर्कवचनार्थतया पृथगुपदेशाधिकरणटीकोक्त एव नापूर्वः। परं प्रकरणशुद्ध्या सङ्गततया मूलवाक्यानि व्याख्यातुं प्रवृत्तैष्टीकाकारैः कर्मनिर्णयटीकायां ब्रह्मतर्कवचनस्य न सोऽर्थ उक्तः। तदर्थनिरूपणस्य प्रकृते सङ्गत्यभावात्। **वेदवाक्यस्य तु**.......इति आचार्यवाक्यस्य तु न सोऽर्थः सम्भवतीत्यावेद्यत इति।

इति। अतः परमतानुवादपरे वाक्ये लौकिकवाक्येष्वित्युक्तम्। तेनोत्तरवाक्येऽपि कथ्यमानं परिहारद्वयं लौकिकवाक्यसम्बन्धीति ज्ञायमानत्वान्नानुपपत्तिः।

यद्यस्य वाक्यस्यैवमर्थो नोच्येत तर्हि तस्याश्शङ्कायास्समाधानं न लभ्येत। तस्माट्टीकाकृत्पादोक्तरीत्यैव व्याख्यानं युक्तम्।

रूढियोगौ समुचितौ विना केवलरूढः केवलयौगिकः केवललाक्षणिकः केवलगौणो वाऽर्थो वेदे नास्तीति प्रमेयस्य प्रतिपादनाय तु "रूढियोगौ विने"त्यादिप्रमाणवाक्यमुत्तरत्र जागर्त्येव।

किञ्च यदि "वेदवाक्यस्य तु" इति वाक्यस्याप्ययमेवार्थोऽभिप्रेतस्स्यात् तर्ह्येतद्वाक्याव्यवहितोत्तरमेव तदुदाहियेत। तस्मादपि भिन्नविषयत्वमनयो -र्वाक्ययोस्सिद्ध्यति।

**प्रकृतसन्दर्भोचिततया वेदवाक्यस्य तु ... इत्यत्र "वाक्य"पदप्रयोगाभिसन्ध्युद्घाटनपूर्वकं टीकाकृत्पादाशयदूषणासम्भवप्रदर्शनम्**

किञ्च यदि योगरूढं विना केवलयौगिकादिरर्थो वेदे नास्तीत्यबुबोधयिषिष्यद्[१] भगवत्पादाचार्यस्तर्हि "वेदस्य तु" इति वा "वैदिकस्य शब्दस्य" इति वा प्रायोक्ष्यत, न तु "वेदवाक्यस्य तु" इति वाक्यपदम्। न हि योगरूढेः केवलयोगादेर्लक्षणादेर्वा वाक्ये प्रसक्तिरस्ति। पदवृत्तयो हि वृत्तयोऽस्मदभिमता योगादयो लक्षणादयश्च। न वाक्यवृत्तयः। अत एवैतदर्थके[२] **"रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेत्। तत्रापि यौगिको मुख्यस्सर्वत्रास्ति स वैदिक"** इतिप्रमाणवचनेऽपि वेदवैदिकशब्दावेव दृश्येते न तु वेदवाक्यशब्दः। तथाचात्र

---

१ बुध-अवगमन इति भ्वादेः, णिजन्तात् सन्, तदन्तात् लृङ्। बोधयितुमैषिष्यदित्यर्थः।

२ योगरूढं विना केवलयौगिकादिरर्थो वेदे नास्ति इति।

**वेदवाक्यस्य तु** इतिवाक्यशब्दप्रयोगेण ज्ञायते वाक्यवृत्तिसम्बन्धिविचार एवात्र निरूप्यत इति । तात्पर्यवृत्तिर्हि वाक्यवृत्तिः । सा च परैरङ्गीकृतेत्यादिः टीकोक्तार्थ एवात्र विवक्षित इति ।

किञ्च नञ्सहितो विनाशब्दोऽविनाभावं वक्तीत्युक्तम् । अस्तु तथा । परन्तु नञ्सहितविनाशब्दस्य प्रकृते "वेदेऽमुख्यवृत्तिरेव नास्ती"ति प्राचीनटीकावाक्येऽसत्त्वात् कथमिदं समर्थनम् ?? कथन्तरां वा टीकाकृत्पादाशयदूषणं भवति ?? **इति तु न बुध्यामहे ॥**

तदेवं टीकोपात्तमूलव्याख्यारीतिरनाविलधवलेति यथामति प्रादर्शि ।

**ग्रन्थव्याख्यानरीतिर्हि जयतीर्थार्यदर्शिता ।**
**हृद्यानवद्यभावाढ्या रम्यैवात्र न संशयः ॥**

**॥ इति मुख्यवृत्तिविमर्शः ॥**

# अनुबन्धः

## परमादरष्टीकाकृतां परमगुरुषु

**"न तत्त्वमार्गे गमनं विना यदुपजीवनम्","कृपालवः स्यान् मयि नित्यमेषां", "मम पद्मनाभतीर्थामृताब्धिर्भवतात् विभूत्या"** इति प्राचीनटीकाकारान् पद्मनाभ-तीर्थान् स्तुवन्तस्तत्र तत्र तदीयव्याख्यानमनूद्य समर्थयमानाश्च प्राचीनटीकाकारेषु पद्मनाभतीर्थेषु परमादरवन्तश्श्रीमट्टीकाकृत्पादा इति निश्चप्रचम्[१]।

न केवलं पद्मनाभतीर्थेष्वादरातिशयः। किन्तु नरहरितीर्थेष्वपि महानादरष्टीकाकृत्पादानाम्। अत एव जिज्ञासाधिकरणीयस्य **"तेनानिष्टं कथं भवेत्"** इति वाक्यस्य **"तेन+अनिष्टम्"** इति पदविभागं कृत्वा स्वयं व्याख्याय, **"केचित्**[२]**"ते तव अनिष्टं कथं न भवेदि"ति व्याचक्षते"** इति नरहरितीर्थानां

---

१ अधिकं परिशिष्टे द्रष्टव्यम्।

२ केचिच्छब्देन ग्रहणमेवानादरसूचकमिति तु, भगवान्भ्रम एव। तथाहि - केचिदित्यादिना पराभिमतमनूद्य क्वचित्सर्वांशेऽभ्युपेयते, क्वचिच्चोपपाद्यते, क्वचिच्चैकांशेऽभ्युपेयते, क्वचिच्चोदास्यते, क्वचिच्च निराक्रियत इति स्थितिः। यदि केचिदित्यनादरसूचकमेव स्यात्तर्हि निराकार्यांशानुवादप्रसङ्ग एव केचिदिति वक्तव्यं स्यात्। न च तथा शास्त्रेषु दृश्यत इति विदितमेव समेषां विदुषाम्।

किञ्च स्तुत्यतिरिक्ते गुरुनामग्रहणस्य सम्प्रदाये निषिद्धत्वात्, टीकाकृत इति च पद्मनाभतीर्थ-भट्टारकाणामेव ग्रहणात्, नरहरितीर्थमात्रग्रहणस्याभीप्सितत्वे तु तेषां द्वितीयटीकाकारा इत्यादिना ग्रहीतुं शक्यत्वेऽपि अनेकेषामपि व्याख्यातॄणां सञ्जिघृक्षितत्वाच्च केचिदित्युक्तम्। बहवो हि व्याख्यातारो भवन्ति। (मध्वप्रशिष्या बहवो शिष्या एषां मुहुस्तथा। अलश्चक्रुरलं पृथ्वीं सर्वे सद्गुणभूषणाः॥ सदा सकलसच्छास्त्रव्याख्यासौख्यामृताब्धिगाः। सर्वे दुर्वादिदुर्वादकाण्डखण्डन-मण्डनाः॥ इति म.वि.१६.१३२,१३३) परं केचन निबध्नन्ति, केचन न निबध्नन्ति। ते सर्वे च टीकाकृतां मनसि परिवर्तन्ते। तेषां सर्वेषां सङ्ग्रहः केचिदिति। परं निबन्धारो नरहरितीर्था इति टिप्पणीकाराः "केचित् - नरहरितीर्थाः" इति वदन्ति।

किञ्च न प्राचीनानां विमर्शस्तत्रानादरहेतुकोऽनादरहेतुर्वा भवति, किन्तु गौरवपूर्वकोऽयमभिप्रायभेदो निवेद्यत इति (खं.चं.पु.वा.-१०) कथयन्तोऽपि केचिदित्यादावनादरभावं प्रकटयन्ति जनेष्विति महदिदं खेदस्थानम्।

व्याख्यानमनूद्य, **"तत्र न पादादाविति प्रतिषेधस्य नञा निर्दिष्टमनित्यमिति समाधानमवसेयम्"** इति श्रद्धया समर्थयन्ते। केचिदित्यनेन नरहरितीर्था ग्राह्या इति पुत्तिगेमठाधीशानां श्रीनिधितीर्थानां **"केचित् = नरहरितीर्थश्रीमच्चरणा"** इति व्याख्यानेनावगम्यते।

एवं विष्णुतत्त्वनिर्णयटीकायां **"(न च पौरुषेयेण वाक्येन तत्सिद्धिः। अज्ञानविप्रलम्भयोः प्राप्तेः) न च तदर्थत्वेन सर्वज्ञः कल्प्येत"** इति मूलस्य व्याख्यानप्रसङ्गे– "पौरुषेयेण वाक्येन धर्मादिसिद्धिस्तदिति परामृश्यते। सोऽर्थः प्रयोजनं यस्य सर्वज्ञकल्पनस्य तत्तथोक्तम्। तस्य भावस्तत्त्वम्। तृतीया हेतौ। सर्वज्ञकल्पनायाः पौरुषेयवाक्येन धर्मादिनिश्चयः प्रयोजनं यत इति" इति स्वयं **"सर्वज्ञकृतवाक्यात् धर्मादिनिश्चय इति न वाच्यम्"** इति न्यायरत्नावल्यनुसारेण व्याख्याय **"अर्थशब्दो निवृत्तिवचन इति केचित्"** इति नरहरितीर्थानां व्याख्यान-मनूद्य "तत्र ज्ञानादिप्राप्तिस्तच्छब्देन परामृश्यते। अर्थशब्दश्चावर्तनीयः। तस्यार्थो निवृत्तिः तदर्थः। सोऽर्थः प्रयोजनं यस्य सर्वज्ञकल्पनस्येति" इति सप्रश्रयमुपपादयन्ति।

**"अक्षोभ्यतीर्थगुरुणा शुकवच्छिक्षितस्य म"** इत्यादिना चाक्ष्योभ्यतीर्थ-कृतानुग्रहं स्मरन्तश्श्रीमट्टीकाकृत्पादाः प्राचीनेषु सर्वेषु गुरुषु परमादरवन्त इत्यत्र नास्ति संशीतिलेशः। अत एव चात्रापि कर्मनिर्णयटीकायां **"प्रणम्य श्रीमदानन्द-तीर्थार्यपदपङ्कजे। गुरूणां च यथाबोधं व्याकुर्वे कर्मनिर्णयम्"** इत्यत्र **गुरूणामिति** बहुवचनप्रयोगेण पद्मनाभतीर्थनरहरितीर्थादयस्सर्वेऽपि गुरवो भक्तिपूर्वकत्वरूप-प्रकर्षयुतनमनकर्मीकृताः। व्याख्यातं च श्रीनिवासतीर्थैः, **"गुरूणां– पद्मनाभ-तीर्थानारभ्य अक्षोभ्यतीर्थपर्यन्तानामि"**ति।

**आनन्दतीर्थभगवद्वचसां विशिष्ट-**
**व्याख्यानकर्मणि सुरा अधिकारिणोऽत्र ।**
**यन्मादृशोऽपि यतते तदतीव हास्यं**
**किन्नाम भक्तिविवशस्य विभूषणं तत् ॥** (त.नि.टीकान्ते)इति

श्रीमदाचार्यवाक्यानां विशिष्टव्याख्याने दक्षिणामूर्तिप्रभृत्युत्तमदेवानामेव योग्यता नास्माकमिति [१]भावमाकलयतां, सर्वज्ञकल्पत्वेऽप्यात्मनस्स्वयं मन्दमतितामनुसन्दधतां विनयशिखरमारूढानां श्रीमट्टीकाकृत्पादानां परमादरभाव एव परमगुरुषु विजृम्भते, न कदाप्यवगोरणभाव इति सद्भिर्मनसि कर्तव्यम् । इत्यशेषमतिमङ्गलम् ।

**मुख्यवृत्त्या** हि टीकेयं **युक्त्युपेतेति** साधिता ।
प्रतना **बुद्धिपूर्वं** हि **प्रश्रयेणैव** शीलिताः ॥
स्यात्कर्मविजयप्रीतो गुरुहृद्गानगो[२] हरिः ।
दद्यात्सुज्ञानभक्ती स्वे विरक्तिं विषयेषु च ॥

**॥ श्रीकृष्णार्पणमस्तु ॥**

---

१ भावः- मनोवृत्तिविशेषोऽभिप्रायः । अयमर्थः परमादरभावः, अवगोरणभाव इत्यत्रापि बोध्यः ।
२ गुरुहृद्गो योऽनः मुख्यप्राणस्तद्गत इत्यर्थः । अस्मद्गुर्वन्तर्गतभारतीरमणमुख्यप्राणान्तर्गत इति यावत् ।

# परिशिष्टम्

## अथावशिष्टा निरुक्तयः

११) अपरममुख्यवृत्त्या कर्मपरतया प्रसिद्धस्यापि ब्राह्मणस्य परममुख्यवृत्त्या कर्मनामकविष्णुपरत्वमेवेति सूत्रकारसिद्धान्तः। सर्वकर्मनियामकत्वात्सर्व-कर्मकर्तृत्वात् सर्वकर्मकारयितृत्वात् सर्वकर्मज्ञापकत्वात् सर्वकर्मभोक्तृत्वात् सर्वकर्मफलदातृत्वात् सर्वकर्मान्तर्यामिरूपविशेषवत्त्वाच्च कर्मनामको भगवान्। तदिदमपि **सर्वयज्ञभुज** इत्युपलक्षकपदप्रयोगेणाजिज्ञपन् श्रीमदाचार्याः।

> **"स्रष्टा पाता च संहर्ता नियन्ता च प्रकाशिता।**
> **यतः सर्वस्य तेनाहं सर्वोऽस्मीत्यृषिभिः स्तुतः"** ॥ गी.भा.७.५

इति गीताभाष्योदाहृतनारदीयवचनात्,

> **"स्रष्टृत्वाच्चैव पातृत्वान्नियमाच्च प्रकाशनात्।**
> **सर्वत्वमुक्तं विष्णोस्तु न तु सर्वस्वरूपतः"** ॥ ऐ.भा.द्वि.प्रघ.प्र.अध्या.

इत्यैतरेयभाष्योदाहृतभारतवचनात्,

> **"सर्वकामस्सर्वकर्मा सर्वगन्धस्सर्वरसस्सर्वमिदमभ्यात्त"**

इति अत्रैवोदाहृतच्छान्दोग्य (३-२-९ = ३-१४-४)वचनात्,

> **"कर्मनामा तु भगवान् फलकर्तृत्वतो हरिः।**
> **पातनात् पापनामाऽसौ पुनातेः पुण्यनामवान्"** ॥ बृ.भा.५-२ इति

बृहदारण्यकभाष्योदाहृतभारतवचनात्

> **"एष पन्था एतत् कर्म"**

इत्यैतरेयोपनिषद्वचनात्,द्वि.प्रघ.प्र.अध्या

**"कर्तृत्वात् कर्म मातृतः" द्वि.प्रथ.प्र.अध्या**

इत्यैतरेयभाष्योदाहृतप्रमाणवचनात्[१],

**"कर्मनामा हस्तगतः कर्मकृत्त्वाज्जनार्दनः" तै.भृगु**

इति तैत्तिरीयभाष्योदाहृतयजुःसंहितावचनाच्च कर्मनामा विष्णुरिति ज्ञायते।

तथा च **कर्मणः** विष्णोर्गुणपूर्णत्वरूपमहत्त्वादिना **निर्णयो** यस्मादिति कर्मनिर्णय इति निरुक्तिर्लभ्यते, **"महद्धि तत्परं ब्रह्म"**, **"अशेषगुणसम्पूर्तेः"** इत्यनेनाचार्यप्रवचनेन।

१२) **"कर्तृत्वात् सगुणं ब्रह्मे"**त्यनेन सृष्ट्यादिकर्मकर्तृत्वात् **कर्मणः** कर्मनाम्नो हरेस्सृष्ट्यादिकर्तृत्वेन **निर्णयो** यस्मादिति,

१३) **कर्मणः** सृष्ट्यादिरूपस्य विष्णुकर्तृकत्वेन **निर्णयो** यस्मादिति च निरुक्ती असूच्येताम्।

१४) **"कर्माध्यक्षस्सर्वभूताधिवास"** इत्यनेन **कर्मणां** तत्तज्जीवकृतसुकृतदुष्कृतानां विष्णवध्यक्षकत्वेन विष्णुस्वामिकत्वेन **निर्णयो** यस्मादिति निरुक्तिरसूचि[२]।

१५) **अनिर्वचनीयासिद्धेरित्यनेन कर्मणो** ज्ञानकर्मणो दृश्यस्याननिर्वचनीयत्वेन **निर्णयो** यस्मादिति निरुक्तिरसूच्यत।

---

१ ताम्रपर्णी श्रीनिवासाचार्यविरचितायामैतरेयोपनिषद्भाष्यार्थरत्नमालायां- ननु कर्मणाऽन्यत्र मोक्षश्रवणात् तत्प्रसादवैयर्थ्यमित्यत एतदेव कर्मेत्युक्तम्। तद्व्याचष्टे- कर्तृत्वादिति। कर्तृत्वान्मातृत्वात् सर्वज्ञत्वाच्च स एव कर्मेत्यर्थः। कर्मणा मोक्ष इत्यस्यापि सर्वजगज्जन्मादिकारणत्वेन सर्वयोग्यताभिज्ञेन भगवतैव मोक्ष इत्यर्थ इति भावः।

गुणपूर्णत्वसम्भावनाय जगज्जन्मादिकारणत्वलक्षणमुक्तम्- कर्मेति। कर्तृत्वाल्लयकर्तृत्वाच्च कर्म। "मानं ज्ञानं लयश्च" इति वचनात् भाष्ये मातृत्वादित्यस्य लयहेतुत्वादित्यर्थः। इति।

२ स्वामित्वमत्र फलदातृत्वमिति कर्मनिर्णयटीकाविवृतौ छलारी नरसिंहाचार्याः।

१६) **"विदा मघवन् विदा गातुमनुशंसिषो दिशः।"** इत्यस्य **'मघवन् मखपते, विद वेदयेति सामान्यतोऽपेक्षिताऽशेषवेदनमुक्त्वा तात्कालिकापेक्षितार्थं प्रार्थयति गातुं विदेती'**ति व्याख्यानेन **कर्मणो** मखादिकर्मपतित्वात् कर्मनाम्नो विष्णोरेव सकाशान्निर्णयः सामान्यविशेषविषयकज्ञानं समेषां यजमानानां भक्तानामिति **निर्णयो** यस्मादिति निरुक्तिस्सूचिता भवति।

१७) **"आभिष्ट्वमभिष्टिभिः प्रचेतन प्रचेतय। इन्द्र द्युम्नाय न इष एवाहि शक्रः"** इत्यस्य **'प्रकृष्टचेतन सर्वज्ञ परमात्मन्। द्युम्नाय ज्ञानाय वित्ताय यशसे वा। इषे अन्नाय च नः प्रबोधये'**ति व्याख्यानेन प्राग्वदेव निर्वचनमसूचि।

१८) **"राये वाजाय वज्रिवश्शविष्ठ वज्रिन्नृञ्जसे। मंहिष्ठ वज्रिन्नृञ्जस आयाहि पिब मत्स्व"**। अनेन **कर्मणो** विष्णोः **कर्मत्वेन**[1] कर्माभिमानीन्द्रनियामकत्वेन यज्ञादि-**कर्मसम्बन्धिसोमादिहविर्भोक्तृत्वेन**[2] च **निर्णयो** यस्मादिति निर्वचनमसूच्यत।

---

१ तपो मे हृदयं ब्रह्म तनुर्विद्या क्रियाऽऽकृतिः। (भागवते ६-४-४६), शृङ्गाराद्याकृतिगतः क्रियात्मा पाकशासनः। भा.ता.क्रियात्मा कर्मस्वामी- इति सत्यधर्मतीर्थाः। क्रियात्मा क्रियाभिमानी- इति चट्टि वेङ्कटाद्रयः। कर्माभिमानित्वादभिमान्यधिकरणन्यायेन कर्मशब्दवाच्यस्येन्द्रस्य सत्तादेर्नियामक-त्वात्, "तदधीनत्वादर्थवदि"ति न्यायेन "यदधीना यस्य सत्ता" इत्युक्तरीत्या कर्मशब्दमुख्यवाच्यः कर्माभिमानीन्द्रनियामकस्तत्त्वेन।

२ "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" छा.उ. अ-३. खं-१४. मं-४। छा.उ.भा- एकत्र सर्वगन्धादिना चिदानन्दादिसर्वगन्धादिरूपत्वमुच्यते। अन्यत्र तद्भोक्तृत्वम्।

प्रभवादेः सत्ताप्रतीत्यादिकारणत्वात् तद्भोक्तृत्वाच्च प्रभव इत्यादि। तथा च श्रुतिः- "सर्वकर्मा सर्वकाम" इत्यादिगीताभाष्ये च। ७-६।

अत्रेदमवधेयम्- यद्यपि हविरादिभोक्तृत्वमस्यां श्रुतौ "सर्वकाम" इति शब्देन प्रतिपादितम्। "ननु कामो नामेच्छाऽपरनामकोऽभिलाषः स च न भोग्य इत्यतो विवक्षितं कामशब्दार्थमाह - काम्यन्त इतीति। "काम्यन्त इति कामाः द्रव्याणि"। (प्र.दी) द्रव्याणि हविःपुष्पफलादीनि" इति भावरत्नकोशे सुमतीन्द्रतीर्थैर्व्याख्यानात्। तथापि कामशब्दवाच्यहविरादिभोक्तृत्वात् काम इत्युच्यते यथा, तथा कर्मसम्बन्धित्वात् (कर्मकर्मत्वात्=कर्म देवतोद्देशेन द्रव्यत्यागरूपयागलक्षणं कर्म, तत्कर्मत्वात् तद्विषयत्वात्) कर्मपदलक्ष्यं हविरादि तद्भोक्तृत्वात् कर्म इत्यप्युच्यत इति वक्तुं शक्यते। तत्र हविरादि कामपदेन गृहीतम्। अत्र कर्मपदेनेति विशेषः।

१९) **"विदा रायस्सुवीर्यमि..."**त्यादिना मन्त्रेण तद्भाष्येण च **कर्मणो** विष्णोः **कर्मत्वेन** दैवमानुषवित्तसुवीर्यादिरूपकर्मफलदातृत्वेन[१] **निर्णयो** यस्मादिति निर्वचनं सूचितम्।

२०) **"यो मंहिष्ठो मघोनाम्..."** इत्यनेन **कर्मणो** ज्ञानकर्मत्वयोग्यस्य सर्वस्य **निर्णयो** ज्ञानं विष्णोरिति **निर्णयो** यस्मादिति निर्वचनं सूचयाञ्चक्रे।

२१) **"तमूतये हवामहे..."** इत्यनेनापि रक्षा,भिप्रायसिद्धि,शत्रुपापाज्ञानादिनिवारण-रूपेश्वरदत्तफलवत्त्वेन **कर्मणो** यज्ञादिरूपस्य **निर्णयो** यस्मादिति निर्वचनं सूचनभाजनतामगात्।

२२) **"इन्द्रं धनस्य सातये..."** इत्यनेनेश्वरप्रत्तदैवमानुषवित्तादिफलवत्त्वेन **कर्मणो** यज्ञादिरूपस्य **निर्णयो** यस्मादिति निर्वचनं सूचनभाजनतां प्रापत्।

२३) **"सुम्न आधेहि नो वसो..."** इत्यनेन भगवदनुगृहीतसुखरूपफलवत्त्वेन **कर्मणो** यज्ञादिरूपस्य **निर्णयो** यस्मादिति निर्वचनं सूचनगोचरतामगात्।

२४)**"नूनं तन्नव्यं सन्यसे..."** इत्यनेन **कर्मणो** गुरुजीवस्य[२] सकाशात् **कर्मणः** शिष्यजीवस्य **कर्मणः** सकलवेदादिगतस्तुतिकर्मणो विष्णोः **निर्णयो** ज्ञानमुत्पद्यत इति **निर्णयो** यस्मादिति निर्वचनं सूचनगोचरतां प्रापत्।

---

अथवा सर्वकर्मेत्यत्र कर्मपदेन यज्ञादिकर्म विवक्षित्वा तद्भोक्तृत्वं कथितम्। यज्ञादिभोक्तृत्वं न केवलं यज्ञादिक्रियाभिव्यक्तानन्दानुभववत्त्वं, किन्तु यज्ञसम्बन्धिहविरादिभोक्तृत्वमपि। ई.भा.टी.-टिप्पण्यां सत्यप्रज्ञतीर्थैः यज्ञशब्दव्याख्यानप्रसङ्गे "यद्- अस्ति यज्ञजातं तत्सर्वं जानाति रसनेन्द्रियेण साक्षात्करोति भुङ्क्ष इति यावदिति यज्ञ इत्युक्तं भवती"ति व्याख्यानात्। इति

१ "कर्मनामा तु भगवान् फलकर्तृत्वतो हरिः। पातनात् पापनामाऽसौ पुनातेः पुण्यनामवान्" इति बृहदारण्यकभाष्योदाहृतभारतवचनात् कर्मफलदातृत्वात् कर्मनामा विष्णुः।

२ "करोऽस्मिन् मीयत इति कर्म जीव उदाहृत" इति गीतातात्पर्योदाहृतनारदीयवचनात् कर्मशब्दो जीववाच्यपि।

२५) **"आयोमन्याय मन्यवे..."** इत्यनेन **कर्मणां** यज्ञादीनां **निर्णयो** ज्ञानमेव फलमिति **निर्णयो** यस्मादिति निर्वचनं सूचनगोचरतामनायि ।

२६) **"प्रचेतन प्रचेतय"** इत्यारभ्य**"इत्युपसृजति"** इत्यन्तेन **कर्मणो** मन्त्रोपसर्जन-रूपस्य **निर्णयो** यस्मादिति निर्वचनं सूचनगोचरतां लेभे ।

२७) **"एवं ज्ञात्वा हरिं तं च कर्म कुर्वन्न जायते"** इत्यनेन **कर्मणो** विष्णोः **कर्मत्वेन** क्रतुरूपकर्मनिर्मापकत्वेन । उपलक्षणमेतत् । गुणान्तरविशिष्टत्वेन च **निर्णयो** ज्ञानं, **कर्मणः** कर्मकर्तुर्जीवस्यावश्यकमिति **निर्णयो** यस्मादिति निर्वचनं सूचनगोचरतामलब्ध ।

२८) **"प्रप्र वस्त्रिष्टुभमिषम्..."** इत्यनेन,**कर्मणो** विष्णोः **कर्मार्थं** यज्ञसिद्ध्यर्थं **कर्मणः** शंसनकर्मणस्त्रिष्टुभाख्यान्नस्य विषये **निर्णयो** ज्ञानपूर्वकेच्छा भवतीति **निर्णयो** यस्मादिति निर्वचनेन सूचनगोचरताऽलाभि ।

२९) **"नदं व ओदतीनाम्..."** इत्यनेन **कर्मणां** स्वाहाकारवषट्कारहन्तकारस्वधा-कारयुतानां देवमनुष्यपितृसम्बन्धिनां विष्णुनियम्यवायुनियम्यवेदप्रतिपाद्य-त्वेन **निर्णयो** यस्मादिति निर्वचनं सूचनपात्रतां प्रापत् ।

३०) **"ता अस्य सूददोहसः..."** इत्यनेन **कर्मणे** कर्मफलप्रदत्वात् सूददोहश्शब्द-वाच्यमुख्यप्राणान्तर्गतभगवत्प्रीत्यर्थं **कर्म** यज्ञाङ्गसोमसवनादि कर्मेति **निर्णयो** यस्मादिति निर्वचनं सूचनपात्रतामलब्ध ।

३१) **"अर्चत प्रार्चत..."** इत्यनेन, **कर्मणो** यज्ञादिरूपस्यार्चनस्याल्पाधिकारि-कर्तव्यत्वेन, अज्ञजनशिक्षणार्थं ज्ञानिभिरपि कर्तव्यत्वेन **निर्णयो** यस्मादिति निर्वचनं सूचनपात्रतामगात् ।

३२) **"अर्चत प्रार्चत..."** इत्यनेनैव **कर्मणः** प्रार्चनस्य ज्ञानध्यानादिरूपस्योत्तमाधिकारिकर्तव्यत्वेन **निर्णयो** यस्मादित्यपि निर्वचनं सूचनपात्रतामगमत्।

३३) तत्रैव **"श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप"** इति भगवद्वचनोदाहरणेन **कर्मणो** द्रव्ययज्ञस्य ज्ञानयज्ञादधमत्वेन **निर्णयो** यस्मादिति, ज्ञानयज्ञस्य वा द्रव्ययज्ञोत्तमत्वेन **निर्णयो** यस्मादिति निर्वचनं सूचनपात्रतामगच्छत्।

३४) **"अवस्वराति गर्गरो..."** इत्यनेन **कर्मणो** ब्रह्मप्रतिपादकत्वेनानुसंहितवेदमन्त्रपठनपूर्वकं कर्तव्यत्वेन **निर्णयो** यस्मादिति निर्वचनं सूचनपात्रतामैत्।

३५) **"आ यत् पतन्त्येन्यः..."** इत्यनेन, **कर्मणां** सर्वकर्मणां, इन्द्रनामकविष्णोरुदकपानार्थं नद्यः प्रवहन्ति, तदापतनजन्यघोषश्चेन्द्रनामकविष्णुवाचक इत्यनुसन्धानपूर्वकं नदीस्नानतीरवासादिनाऽचञ्चलीकृतमनोभिः कर्तव्यत्वेन **निर्णयो** यस्मादिति निर्वचनं सूचनपात्रतामनायि।

३६) **"यो व्यतीँरफाणयत्..."** इत्यनेन **कर्मणां** यज्ञादीनां, भगवत्तत्त्वज्ञानादौ शक्तिप्रेरणार्थं भगवत्प्रवर्तिता ये तत्त्वाभिमानिदेवास्तदुपेतमनआदिकत्वरूपफलवत्त्वेन **निर्णयो** यस्मादिति निर्वचनं सूचनपात्रतामविन्दत।

३७) **"तक्को नेता तदिद्वपुः..."** इत्यनेन **कर्मणो** जगत्सृष्ट्यादिकर्मकर्तृत्वात् कर्मनाम्नो विष्णोः,**कर्मत्वेन** सृष्ट्यादिकर्माश्रयत्वात् कर्मनामकदेहरूपत्वेन **निर्णयो** यस्मादिति निर्वचनं सूचनपात्रतामविन्दत्।

३८) **"अतीदु शक्र ओहत..."** इत्यनेन **कर्मणां** मोक्षप्रतिबन्धकानां वेदवाक्यश्रवणादिनैव पच्यमानानां भगवता बादरायणेन भिद्यमानत्वेन **निर्णयो** यस्मादिति निर्वचनं सूचनपात्रतां विविदे।

३९) तेनैव **कर्मणां** जीवानामज्ञानादिनिवर्तनपूर्वकं भगवता स्वात्मानं प्रति प्रापितत्वेन **निर्णयो** यस्मादिति निर्वचनं सूचनपात्रतां विवेद ।

४०) "**अर्भको न कुमारक...**" इत्यनेन **कर्मणः** श्रुत्यादिविहितसर्वकर्मकर्तृत्वात् जीवैस्तत्तद्योग्यसर्वकर्मणां कारयितृत्वाच्च कर्मनाम्नो ब्रह्मणो वायोश्च **निर्णयः** स्वयोग्यसर्वज्ञानाभिव्यक्तिर्यस्मादिति **निर्णयो** यस्मादिति निर्वचनं सूचनपात्रतामवित्त ।

४१) "**विलोमश्शत्रुजयकृत्संसर्गः पापनाशनः । यथास्थितश्श्रीकरस्स्यात् स्वाध्यायश्शंसनेऽपि च**" इत्यनेन **कर्मणो** विलोमतया मन्त्रपठनरूपस्य यजमानसम्बन्धिशत्रुजयकृत्त्वेन,

४२) संसृष्टतया पठनरूपस्य **कर्मणो** यजमानसम्बन्धिपापनाशकत्वेन,

४३) यथास्थितपठनरूपस्य **कर्मणो,** होतुः श्रीकरत्वेन **निर्णयो** यस्मादिति निर्वचनं सूचनपात्रतामवेदिष्ट ।

४४) "**ध्यायन् कर्माण्यकृत्वापि मुच्यते सर्वपातकैः**" इत्यनेन **निर्णयो** ध्यानरूपं ज्ञानमपि **कर्म** कर्मसदृशं कर्मवत् पापपरिहारकमिति **निर्णयो** यस्मादिति निर्वचनं सूचनपात्रतामविदत् ।

४५) "**न चैवमादिवाक्यानां स्वार्थे प्रामाण्याभावः**" इत्यादिना **कर्मणां** लक्षणया कर्मसम्बन्धिनामर्थवादवाक्यानां **कर्मणां** प्रतिपादनकर्मणां प्रतिपाद्यानामिति यावद्, अनेकत्वेन स्वार्थप्राशस्त्यरूपानेकात्मकत्वेन **निर्णयो** यस्मादिति निर्वचनं सूचनपात्रतां जगाम ।

४६) **"यत्र वाचनिकार्थादन्यस्तात्पर्यार्थः प्रतीयते लौकिकवाक्येषु न तत्र साक्षाद्वचनं बोधकम्। वचनलिङ्गानुमा हि सा"** इत्यनेन विषं भुङ्क्ष्वेत्यादौ **कर्मणो** ज्ञानकर्मणो निषिद्धान्नभोजनवर्जनादेरनुमेयत्वेन तात्पर्यवृत्तिसहकृतवाक्य-जन्यबोधाविषयत्वेन च **निर्णयो** यस्मादिति निर्वचनेन सूचनपात्रता प्रापि।

४७) **"विरोधादमुख्यवृत्तिर्वा"** इत्यनेन **कर्मणो**ऽग्निर्माणवको, गङ्गायां घोष इत्यादौ ज्ञानकर्मणो गौणीलक्षणारूपामुख्यवृत्तिसहकृतशब्दजन्यबोधविषयत्वेन तात्पर्यवृत्तिसहकृतवाक्यजन्यबोधाविषयत्वेन च **निर्णयो** यस्मादिति निर्वचनेन सूचनपात्रता प्रापे।

४८) **"वाचनिकानां तु बहूनामप्यविरोधे स्वीकार्यता"** इत्यादिना **कर्मणां** वचनजन्य-प्रतीतिकर्मणामविरोधे बहुत्वेन **निर्णयो** यस्मादिति निर्वचनेन सूचनपात्रता प्राप्यत।

४९) **"रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेद्"** इत्यनेन, **कर्मणां** वेदजन्य-प्रतीतिकर्मणां योगरूढत्वेन, केवलयौगिकत्वाभावेन, केवलरूढत्वाभावेन, केवललाक्षणिकत्वाभावेन केवलगौणत्वाभावेन च **निर्णयो** यस्मादिति निर्वचनेन सूचनविषयता प्रापि।

५०) **"प्रतीयमाने तु विरोधे तदन्योऽर्थः स्वीकार्यः। वाचनिक एव।"** इत्यनेन, **कर्मणां** वचनजन्यप्रतीतिकर्मणां विषये **निर्णयो**"विरोधे प्रतीयमाने मुख्या-मुख्यवृत्तिसहकृतवचनलभ्य एवाविरुद्धोऽर्थः स्वीकार्य" इत्याकारको यस्मादिति निर्वचनेन सूचनविषयता प्रापे।

५१) **"मुख्यार्थानां च सर्वेषां तारतम्यं च विद्यत"** इत्यनेन, **कर्मणां** मुख्यवृत्ति-सहकृतवचनजन्यप्रतीतिकर्मणां तारतम्यवत्त्वेन **निर्णयो** यस्मादिति निर्वचनेन सूचनविषयता प्राप्यत।

५२) **"स्वतो मुख्यविरोधे तु त्याज्योऽन्योऽर्थोऽखिलेष्वपि"** इत्यनेन, **कर्मणां** मुख्यवृत्तिसहकृतवचनजन्यप्रतीतिकर्मणां विषये, "परस्परविरोधे परममुख्यार्थो ग्राह्योऽपरममुख्यार्थस्त्याज्य" इत्याकारको **निर्णयो** यस्मादिति निर्वचनेन सूचनविषयताऽलाभि ।

५३) **"न च क्रियायामेव प्रयोजनं न सिद्ध इति युक्तम्"** इत्यनेन, **कर्मणः** पराभि-प्रेतकार्यमात्रस्य सप्रयोजनज्ञानविषयत्वाभावेन **निर्णयो** यस्मादिति निर्वचनेन सूचनविषयताऽलभ्यत ।

५४) **"ज्ञानमात्रेऽपि महाप्रयोजनदर्शनात् पितृजीवनादिवाक्ये"** इत्यनेन, **कर्मणः** सिद्धिकर्मणः सिद्धस्यापि समहाप्रयोजनज्ञानविषयत्वेन **निर्णयो** यस्मादिति निर्वचनेन् सूचनविषयता लेभे ।

५५) **"ध्यानं त्वखिलकर्मभ्यो ध्यानाच्च ज्ञानमुत्तमम्"** इत्यनेन, **"अशेषकर्मपूगोऽपि न विष्णुध्यानलेशभाक् । तच्च ध्यानं हरेर्ज्ञानकोट्यंशाय न पूर्यते" इति कर्मविवेके"** इत्यनेन च **कर्मणो** ज्ञानाधमध्यानाधमत्वेन **निर्णयो** यस्मादिति निर्वचनेन सूचनविषयता विविदे ।

५६) एतादृशनिर्णयजनकप्रमाणवाक्यस्य **कर्मविवेक**नामकग्रन्थस्थत्वात् तादृश-निर्णयजनकस्यास्यापि ग्रन्थस्य कर्मनिर्णय इति तद्ग्रन्थनामसदृशं नामेति समसूच्यत ।

५७) **"न च कर्ममात्रे पर्यवसितिर्वेदस्य"** इत्यनेन **कर्मणः** कार्यमात्रस्य निरा-काङ्क्षताहेतुभूतप्रतिपादनविषयत्वाभावेन **निर्णयो** यस्मादिति निर्वचनं समसुसूचन्नाचार्यवर्याः ।

५८) **"सुखज्ञानस्यैव प्रयोजनत्वात्। अतस्सिद्धस्यैव प्रयोजनत्वं सिद्धम्"** इत्यनेन **कर्मणो**ऽपि सिद्धिकर्मणस्सिद्धस्यापि निराकाङ्क्षताहेतुभूतप्रतिपादनविषयत्वेन **निर्णयो** यस्मादिति निर्वचनं सूचयाम्बभूवुराचार्यसाराः।

५९) **"भाक्तं वाऽनात्मवित्त्वात् तथाहि दर्शयति"** इतिसूत्रोदाहरणेन, **कर्मणां** जिज्ञासुकृतसकामकर्मणां मन्वन्तरपर्यन्तामृतत्वरूपस्वर्गसाधनत्वेन,

६०) **कर्मणां** जिज्ञासुकृतनिष्कामकर्मणां मोक्षहेतुज्ञानसाधनत्वेन,

६१) **कर्मणां** ज्ञानिकृतनिष्कामकर्मणां मोक्षैकदेशानन्दाभिवृद्धिसाधनत्वेन **निर्णयो** यस्मादिति निर्वचनं सूचयाञ्चक्रुराचार्यरसाः।

६२) **"अपाः पूर्वेषां हरिव..."** इत्यादिना **कर्मण** इज्यत्वेन कर्मसम्बन्धिनो विष्णोः, **कर्मत्वेन** हविष्ट्वेन कर्मसम्बन्धित्वात् कर्मशब्दलक्ष्यो यस्सोमः, लक्षितलक्षणया तत्पानं कर्म तत्कर्तृत्वेन, कर्म सोमपानरूपं कर्म तत्कर्तृत्वेनेति वा **निर्णयो** यस्मादिति निर्वचनमसूचयन्नाचार्यमचर्चिकाः।

६३) **'अपाः पूर्वेषामि'**ति ब्राह्मणोदाहृतर्ग्-व्याख्यानव्याजेन ब्राह्मणं संस्मारयन्त्यः **कर्मणः**, अपाः पूर्वेषामित्येतयर्चा यजनरूपस्य शस्त्रसमाप्त्यनन्तरं कर्तव्यत्वेन **निर्णयो** यस्मादिति निर्वचनं,

६४) **कर्मणः** षोडशीक्रतोस्सवनत्रयगतभगवद्रूपविशेषप्रसादसाध्यत्वेन इन्द्रनामक-भगवत्प्रसादसाध्यत्वेन च **निर्णयो** यस्मादिति च निर्वचनं ज्ञापयामासु-राचार्यमतल्लिकाः।

६५) **"विहृतपक्षे तु"** इत्यादिना **कर्मणो** विहरणस्य **निर्णयो** यस्मादिति निर्वचनं बोधयामासुराचार्यर्षभाः।

तदेवं **कर्मनिर्णय**नाम निरुक्ताभिरनेकविधाभिर्निरुक्तिभिरत्यन्तमन्वर्थकमिति बह्वर्थमिति च निरधारि। एतावत्य एव निरुक्तय इति न मन्तव्यम्। दिग्दर्शन-मात्रमेतत्। तथाच प्राय एतद्ग्रन्थोक्तसर्वार्थसङ्ग्राहकत्त्वेन टीकाकारैः **कर्मनिर्णय** इति नामैव स्व्यकारीत्यवधेयम्॥

॥ इति निरुक्तयः ॥



## टीकापक्षे मूलवाक्ययोजनादिप्रकारनिरूपणम्

टीकापक्षे **"युक्तिश्च। बुद्धिपूर्वं सर्वकर्तृत्वात् सर्वज्ञत्वादयो युक्ताः"** इतिवाक्ययोजना टीकायामेव व्यक्ता।

तथाहि- टीका- **तर्हि कथमेतत्। इत्थम्। क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवदिति युक्तिश्च ब्रह्मणस्सगुणत्वेऽस्तीति प्रथमवाक्यार्थः। तत्राशङ्का। नन्वनेन प्रसिद्धकर्तृनिरपेक्षोत्पत्तिकस्यापि क्षित्यादेस्सकर्तृकत्वं सिद्ध्यति। न तु ब्रह्मण-स्सगुणत्वमिति। तत्राह- बुद्धिपूर्वमिति। यया युक्त्या सर्वस्य जगतः कर्ता सिद्धस्तस्य सर्वज्ञत्वादयो युक्तास्तयैव युक्त्या सिद्धाः। कुतः ? सर्वकर्तृत्वात् सर्वकर्तृत्वान्तर्गतत्वात्तेषाम्। कथम्। बुद्धिपूर्वं हि कर्तृत्वं भवतीति।** इति

ननु टीकाकृत्पादयोजनायामपि बहवो दोषा आभान्ति। तथाहि-

१) युक्तिश्चेति प्रतिज्ञाय मूले युक्तेस्स्फुटमनुक्तिः।

२) "हि कर्तृत्वं भवति" इति पदाभावः।

३) बुद्धिपूर्वमित्यस्य पृथग्वाक्यत्वम् (वाक्यभेदः)।

४) सर्वकर्तृत्वादित्यस्य सर्वकर्तृत्वान्तर्गतत्वादित्यर्थे लक्षणाश्रयणम्।

५) युक्ता इत्यस्य यया युक्त्या सर्वकर्तृत्वं सिद्धं तयैव युक्त्या सिद्धा इत्यर्थ-कल्पनमिति चेत्। न। क्रमेण सर्वासामपि दोषशङ्कानामत्र सुपरिहारात्।

तथाहि- अत्रेयमाद्या शङ्का- युक्तिश्चेत्येव कुत उक्तं, युक्तिर्विशेषतः कुतो न वचनपथमानीतेति। अत्रेदं समाधानं- क्षित्यङ्कुरादिसकर्तृकत्वसाधिका कार्यत्वयुक्तिः प्रसिद्धैवेति न विशेषत उक्तिविषयतां प्रापिता। प्रमाणलक्षणेऽपि **"विमतं सकर्तृकमित्यत्र सर्वज्ञत्वस्य पक्षधर्मताबलेन सिद्ध्यङ्गीकारादि"**त्यत्र

कार्यत्वादिति हेतुः प्रसिद्धत्वादेवाचार्यैर्न जगदे। तेनेयं शैली समस्ति भगवत्पादाचार्याणामिति ज्ञायते।

अपि स्पष्टमुक्तौ महती हानिः काचित्? । न महती।

अथ कीदृशी ? अल्पा।[१]

आविपालगोपालाङ्गनं सुप्रसिद्धया कार्यत्वयुक्त्या सेत्स्यमानं सर्वकर्तृत्वमपि न जानन्ति प्रतिवादिनः...???, हन्त..! तर्हि कीदृशीयं दुर्गतिः प्रज्ञायाः प्रतिवादिनामिति प्रज्ञापनं न स्यादिति।

किञ्च **युक्तिश्चे**ति प्रतिज्ञाय कार्यत्वमिति स्पष्टं कथनेऽपि पुनश्शङ्का समुदेष्यत्येव। कार्यत्वेन कर्तृसिद्धावपि कथं तस्य सगुणत्वसिद्धिरिति। तत्परिजिहीर्षन्तो भगवत्पादा यया युक्त्या जगतः कर्ता सिद्धस्तस्य सर्वज्ञत्वादयो युक्तास्तयैव युक्त्या सिद्धाः। कुतः? सर्वकर्तृत्वान्तर्गतत्वात्तेषामित्यर्थकस्येदानीं परिदृश्यमानस्य वाक्यस्यापि प्रयोगं वितन्वीरन्नेवेति गौरवं गौरवं[२] स्यात्। कथनसंक्षेपनिर्बन्धिनो गुरुतमस्यागौरवमेव गौरवं[३] हि।

**सर्वकर्तृत्वात्सर्वज्ञत्वादयो युक्ता**इति कथने तु कर्तृसाधकं कार्यत्वमेव युक्तितया विवक्षितमित्यपि ज्ञायते, तदुपरि कर्तृसिद्धावपि कथं तस्य गुणाः सेत्स्यन्तीति गुणासिद्धिशङ्कापङ्कसङ्क्षालनमपि सम्बोभवीतीति लाघवं गौरवं[४] स्यात्।

---

१ सुप्रसिद्धयुक्तिज्ञानमपि नास्तीत्यहो बुद्धिदारिद्र्यं प्रतिवादिनामिति ज्ञापनं कार्यत्वयुक्तेः स्फुटं कथने न सम्भवतीति प्रतिवादिबुद्धिदारिद्र्यज्ञापनासम्भवरूपा अल्पा हानिरस्तीति भावः।

२ गुरुसम्बन्धि इत्यर्थः।

३ गौरवप्रदं भूषणमिति यावत्।

४ गुरुसम्बन्धि इत्यर्थः।

द्वितीयशङ्कायाश्च समाधानं- शेष इति। शिष्यमनोव्याकुलतानिरसनकुशलैः कृपालुभी राघवेन्द्रश्रीचरणैः **"हि कर्तृत्वं भवतीति शेषोक्ति"**रित्यभिहितत्वात्।

तदनेन तृतीयशङ्काऽपि समाहिता वेदितव्या।

तदयमाशयः पूज्यपरिमळाचार्याणाम्।

अस्तु '**हि कर्तृत्वं भवती**'ति शेषः। अस्तु च तन्निबन्धनो **बुद्धिपूर्वं हि कर्तृत्वं भवती**ति वाक्यभेदः। अस्तु वा तयोर्दोषत्वम्। अथापि तयोः पददोषत्वेनाबहुत्वेन चाजघन्यत्वाद् ग्राह्यत्वम्। **बुद्धिपूर्वं सर्वकर्तृत्वात् सर्वज्ञत्वादयो युक्ता इत्यस्य** मूलवाक्यस्य प्रतीयमानैकवाक्यत्वमादृत्य कृतायां प्राचीनयोजनायां टीकोक्तानाम-प्रसिद्धविशेषणत्व,विशेषणवैयर्थ्यादीनां चार्थदोषत्वेन बहुत्वेन च जघन्यत्वाद-ग्राह्यत्वम्। पददोषादर्थदोषस्य, अबहुदोषकपक्षाद्बहुदोषकस्य च जघन्यतायास्सर्व-सम्प्रतिपन्नत्वात्। 'यत्राल्पीयांसो दोषास्स पक्ष' इति हि परीक्षकाणामैकमत्यम्।

वस्तुतस्तु सम्भवत्येकवाक्यत्वे हि वाक्यभेदस्य दोषत्वम्। न चात्र **बुद्धिपूर्वं सर्वकर्तृत्वात्.....**इत्यस्यैकवाक्यत्वं सम्भवति। एकवाक्यत्वादरणेन व्याख्याने प्राचीनटीकायां बहूनामप्रसिद्धविशेषणत्वादीनां क्लेशानां पूर्वमेव निरूपितत्वात्। तथा च प्रकृते निर्दुष्टैकवाक्यत्वासम्भवादेव वाक्यभेदोऽङ्गीकृत इति न स दोषो भवति[१]। न वा कश्चित् शेषं दोषत्वेन मनुत" इति।

एतेनैव चतुर्थशङ्काऽपि समाहिता वेदितव्या। तस्या अपि पददोषत्वात्।

वस्तुतस्तु न शेषकरणं, न वा वाक्यभेदो, न वा लक्षणा। विनैवाध्याहारादिना टीकोक्तयोजनायास्सुसङ्गतत्वात्।

---

१ निर्दुष्टैकवाक्यत्वे सम्भवति वाक्यभेदस्य दूषकत्वम्। अन्यथा तु वाक्यभेदो न दोषावह इति भावः।

तथाहि- बुद्धिपूर्वमित्यस्य **बुद्धिप्रभृतीति** श्रीनिवासतीर्थैर्व्याख्यानं व्यधायि। तथाच **"बुद्धिपूर्वं सर्वकर्तृत्वात् सर्वज्ञत्वादयो युक्ता"** इत्यस्य बुद्धिपूर्वं- बुद्धिप्रभृति =बुद्धीच्छाप्रयत्नपूर्वकपरिस्पन्दरूपं यत्सर्वकर्तृत्वं तद्रूपत्वात् सर्वज्ञत्वादयो युक्ता युक्तिसिद्धा इत्यर्थः। तथाच सर्वकर्तृत्वपदस्य सर्वकर्तृत्वान्तर्गतत्वरूपार्थे न लक्षणा, नापि **"हि कर्तृत्वं भवति"** इत्यध्याहारः, अत एव च न वाक्यभेद इति बोद्धव्यम्।

'बुद्धिपूर्वं हि कर्तृत्वं भवति' इति,'सर्वकर्तृत्वान्तर्गतत्वात्तेषाम्' इति च कथयितॄणां टीकाकृतां भावस्तु स्फुटीभविष्यति।

एवं हि योजनायामत्रैवं शङ्के भवतः।

**"बुद्धिप्रभृति यत्सर्वकर्तृत्वम्"** इत्युक्तत्वात् सर्वकर्तृत्वमेव बुद्धिप्रभृतिरूपं चेत् कर्तृत्वसामान्यं बुद्धिप्रभृतिरूपं न भवति किम् ? इत्येका

कुतश्च बुद्धिपूर्वमित्युक्तमिति चापरा।

तन्निवृत्तये **"बुद्धिपूर्वं हि कर्तृत्वं भवति"** इति विवरणं कृतम्।

अत्र कर्तृत्वमिति कर्तृत्वसामान्यवाचकशब्दप्रयोगेण, प्रकृतत्वात् सर्वकर्तृत्व-शब्दश्श्रीमदाचार्यैर्यद्यपि प्रायुज्यत। तथापि कर्तृत्वसामान्यमेव बुद्धीच्छाप्रयत्न-पूर्वकपरिस्पन्दरूपमिति विवक्षितमिति सूचयाञ्चक्रे। तेन प्रथमशङ्कायाः परिहारः समजनि।

यद् यदभिन्नं तत्तत्साधकप्रमाणसिद्धमिति व्याप्तिबलेन सर्वकर्तृत्वाभिन्नं सर्वज्ञ-त्वादिकमपि सर्वकर्तृत्वसाधकयुक्तिरूपप्रमाणसिद्धमिति भगवत्पादाचार्याणा-माशयः। सर्वकर्तृत्वस्य सर्वज्ञत्वादिभिरभेदे सिद्धे ह्येतत् सम्भवति नान्यथा।

अतोऽभेदमुपापीपदन् **"बुद्धिपूर्वं हि कर्तृत्वं भवति"** इत्यनेन। तेन द्वितीयशङ्काया: परिहारस्समजायत।

तथाचैवं वाक्यार्थः- सर्वज्ञत्वादय: (सर्वज्ञत्व,सत्यकामत्व,सत्यसङ्कल्पत्व,-समस्तशक्तिसमन्वितत्वसमुदाय:) युक्ता:- लाघवज्ञानसहकारेण सर्वकर्तृत्व-साधिका या कार्यत्वयुक्तिस्तत्सिद्धाः, तादात्म्येन बुद्धिपूर्वं सर्वकर्तृत्वात्= बुद्धिप्रभृति यत्सर्वकर्तृत्वं तद्रूपत्वादित्यर्थ:। यद् यदभिन्नं तत् तत्साधकप्रमाण-सिद्धमिति हि सर्वसम्प्रतिपन्नम्। तथाच सर्वज्ञत्वादिधर्मसमुदायस्य सर्वकर्तृत्व-शब्दार्थाभेद उक्ते सर्वज्ञत्वाद्येकैकधर्माणां सर्वकर्तृत्वशब्दार्थान्तर्गतत्वमर्थात् सिद्ध्यत्येव। तथा च यदत्रार्थात्सिद्धं तदेव टीकायामुक्तम्। **सर्वकर्तृत्वान्तर्गत-त्वादि**ति। न तु तत्र लक्षणा कृतेति बोध्यम्।

ननु साक्षात् **"सर्वकर्तृत्वरूपत्वात् तेषाम्"** इत्येव टीकायां कुतो नोक्तमिति चेत्। उच्यते। सर्वकर्तृत्वरूपत्वात् सर्वज्ञत्वादयस्तयैव युक्त्या सिद्धा इत्युक्ते त्वेवं संशयो भवति। किं सर्वज्ञत्वसत्यसङ्कल्पत्वादिसमुदायसिद्धावेव सगुणत्व-सिद्धिरुतैकैकगुणसिद्धावपीति। तन्निवृत्तय एकैकगुणसिद्धावेव सगुणत्वसिद्धिरिति बोधनाय **"सर्वकर्तृत्वान्तर्गतत्वात्"** इति विवरणं कृतम्। तेन सर्वकर्तृत्वरूप-सर्वज्ञत्वादिसमुदायान्तर्गतानां सर्वज्ञत्वादीनां मध्य एकैकगुणस्य सिद्धावपि सगुणत्वं सिद्ध्यतीति ज्ञायते। **सर्वज्ञत्वादय** इति बहुवचनस्वारस्यानुरोधेन चेदं सिद्ध्यति। अन्यथा समुदायस्य विवक्षितत्वेन सर्वज्ञत्वादिः (समुदायो) युक्त इत्येकवचनं प्रयुज्येत।

अन्तिमशङ्कायास्समाधानं तु- 'घटो रूपीत्याकारकं प्रत्यक्षमस्तीति पूर्वमुक्त्वा तदुपपाद्य, तथा च घटो रूपं च प्रत्यक्षसिद्धमित्युक्ते तत्र प्रत्यक्षपदेन यथा पूर्वप्रसक्तप्रत्यक्षमेव स्वीक्रियते तथाऽत्रापि पूर्वं युक्तिपदेन या युक्तिर्गृहीता

तद्युक्तिसिद्धत्वमेव युक्तशब्दार्थ इति ग्राहणाय "यया युक्त्या" इत्यादिशब्दैर्विवृतमेव केवलं, न तु तच्छेषकरणमि'ति मन्तव्यम्।

अत एव (अध्याहारवाक्यभेदयोरभावादेव) अवतरणिकाटीकादि सङ्गच्छते।

[१]तथाहि- यद्यत्र **'हि कर्तृत्वं भवती'**ति शेष इति टीकाभिप्रेतस्स्यात् तर्हि तत्र वाक्यभेदोऽपि टीकाभिप्रेत इति वक्तव्यम्। **बुद्धिपूर्वमि**त्याद्येकं वाक्यम्। **सर्वकर्तृत्वात्**...इत्याद्यपरं वाक्यमिति। तथा सति **बुद्धिपूर्व**मित्येतदवतरणिकाया-मुक्ता शङ्का **'नन्वनेन प्रसिद्धकर्तृनिरपेक्षोत्पत्तिकस्यापि क्षित्यादेस्सकर्तृकत्वं सिद्ध्यति। न तु ब्रह्मणस्सगुणत्वमि'**त्येवंरूपा, न तेन**'हि कर्तृत्वं भवती'**तिशेष-विशिष्टेनापि **बुद्धिपूर्व**मिति प्रथमवाक्येन परिह्रियते। येन च **सर्वकर्तृत्वात्....** इत्यादिद्वितीयवाक्येन सा परिह्रियते तद्वाक्यस्य चावतरणिका नोक्तेत्यसङ्गति-स्स्यात्। अतस्सम्पूर्णं तदेकमेव वाक्यमिति टीकाभिप्रेतमिति विज्ञायते। तेन च सम्पूर्णेन वाक्येन तस्याश्शङ्कायाः परिहारादवतरणिका सङ्गच्छते।

किञ्च **"बुद्धिपूर्वमि"**तीत्येव प्रतीकग्रहणेन समग्रं वाक्यं व्याख्यायि, न तु **सर्वकर्तृत्वादि**तीति पृथक्प्रतीकं जगृहे। वाक्यभेदे च पृथक्प्रतीकग्रहणं स्यात्।

किञ्च **प्रथमवाक्यार्थ** इत्युक्त्वा, द्वितीयवाक्यार्थ इति कण्ठतोऽकथनेऽपि "यया युक्त्या" इत्यादिनोक्तो द्वितीयवाक्यार्थ इति स्वीकार एवान्ते **"भवतीति"** इत्यत्रेतिपदमन्वितं भवति। अन्यथा तदनन्वितं स्यात्।

---

१ प्रतीतिसौकार्याय पुनरत्र टीकावाक्यान्युद्ध्रियन्ते।

**टीका- तर्हि कथमेतत्। इत्थम्। क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवदिति युक्तिश्च ब्रह्मणस्सगुणत्वेऽस्तीति प्रथमवाक्यार्थः। तत्राशङ्का। नन्वनेन प्रसिद्धकर्तृनिरपेक्षोत्पत्तिकस्यापि क्षित्यादेस्सकर्तृकत्वं सिद्ध्यति। न तु ब्रह्मणस्सगुणत्वमिति। तत्राह- बुद्धिपूर्वमिति। यया युक्त्या सर्वस्य जगतः कर्ता सिद्धस्तस्य सर्वज्ञत्वादयो युक्तास्तयैव युक्त्या सिद्धाः। कुतः ? सर्वकर्तृत्वात् सर्वकर्तृत्वान्तर्गतत्वात्तेषाम्। कथम्। बुद्धिपूर्वं हि कर्तृत्वं भवतीति। इति**

किञ्च मूलावलोकने **"युक्तिश्च"**, इति **"बुद्धिपूर्वं सर्वकर्तृत्वादित्यादि"** च वाक्यद्वयमिति स्फुटं प्रतीतिर्जायते। यदि वाक्यत्रयमिति टीकाकृन्मतं स्यात् तर्हि **प्रथमवाक्यार्थ** इतिवद् **द्वितीयवाक्यार्थ** इति, **तृतीयवाक्यार्थ** इति च टीकायां स्फुटमुच्येत। नाभिहितं च तथा। तेन चावगम्यते प्रथमवाक्यार्थातिरिक्तो **"भवतीति"** इतिशब्दपर्यन्तं कथितः परिशेषाद् द्वितीयवाक्यार्थ एवेति सिद्धत्वात्कण्ठतो नोक्तमिति। वाक्यत्रयमिति नाभिप्रेतं टीकाकृतामिति च।

ननु कथन्तर्हि राघवेन्द्रश्रीमच्चरणानां **'कर्तृत्वं भवतीति शेषोक्तिरि'**त्युक्तिरिति चेत्, न स्मरति भवानुक्तार्थस्य। उक्तमुत्तरं पूर्वमेव राघवेन्द्रश्रीमच्चरणाशयाविष्कार-पूर्वकम्।

नन्वथापि कथं राघवेन्द्रश्रीमच्चरणानां पक्षेऽवतरणिकाटीकासङ्गत्यादिरिति चेदनवगततद्व्याख्यानभावानां स्यादियमाशङ्का। परं सूक्ष्मदृष्ट्याऽवलोकनेऽवगम्यते तैरेव स्वव्याख्यान उक्तमुत्तरम्।

तथाहि- तद्व्याख्यानम्- **बुद्धिपूर्वमितीति वाक्यप्रतीकम्, बुद्धिपूर्वमित्यादीत्यर्थ** इति।

तदयमर्थः। यद्यपि पूज्यपरिमळाचार्याणां पक्षे **बुद्धिपूर्व**मित्येकं वाक्यं, तदुत्तरं **सर्वकर्तृत्वात् सर्वज्ञत्वादयो युक्ता** इत्यपरं वाक्यम्। तथापि मूलावलोकने तु समग्रं तदेकमेव वाक्यमिति प्रतीयते। तथा च मूलावलोकने सति सम्पूर्णं यदेकं वाक्यमिति प्रतीयते तेन चावतरणिकोक्तायाश्शङ्काया **'नन्वनेन प्रसिद्धकर्तृ-निरपेक्षोत्पत्तिकस्यापि क्षित्यादेस्सकर्तृकत्वं सिद्ध्यति। न तु ब्रह्मणस्सगुणत्वमिति'** इत्येवंरूपाया उत्तरं लभ्यत एवेति नावतरणिकाटीकाऽसङ्गतिः। मूले प्रतीयमानस्य वाक्यस्य हि टीकाकृता अवतरणिका वक्तव्या भवति। न तु तत्र यो

वाक्यभेदष्टीकाकृता कल्पितस्तस्य। अथापि तस्यापि अवतरणिका **"कुत:, कथं"** इति टीकायामुपलभ्यत एव।

अत एव– मूलावलोकने सम्पूर्णस्यैकवाक्यत्वावगमादेव पृथक् **सर्वकर्तृत्वा**दिति प्रतीकाग्रहणमपि युज्यते।

**क्षित्यादिकं सकर्तृकं कार्यत्वाद् घटवदिति युक्तिश्च ब्रह्मणस्सगुणत्वेऽस्तीति प्रथमवाक्यार्थ** इतिवन्न द्वितीयवाक्यार्थ इति स्पष्टमभ्यधायि। तत्र यथा **भवतीति** इत्यन्तिमेतिशब्दस्य द्वितीयवाक्यार्थ इत्यध्याहृत्यान्वय उपपाद्यते **बुद्धिपूर्वं सर्वकर्तृत्वात्..**इत्यादेस्सम्पूर्णस्यैकवाक्यत्वाङ्गीकारिभिरेवं तस्य भिन्नवाक्यत्वाङ्गीकारिभिरपि उत्तरवाक्यार्थ: (उत्तरयोर्वाक्ययो:– **बुद्धिपूर्वमि**त्यस्य **सर्वकर्तृत्वात् सर्वज्ञत्वादयो युक्ता** इत्यस्य च अर्थ:) इति ग्रहणेनापि अन्तिमेतिशब्दान्वयस्सूपपाद इति, इतिशब्दानन्वयदोषोऽपि नास्तीति॥

**॥ इति टीकापक्षे मूलवाक्ययोजनादिप्रकारनिरूपणम् ॥**

## प्राचीनटीकाकाराणां टीकाकृत्पादानां च टीकयोः प्रतीयमानविरोधपरिहारः

**"प्रपञ्चो भेदपञ्चक"** इति प्रकृत्यधिकरणीयानुव्याख्यानव्याख्यानरूपसुधायां **"स च जीवेश्वरप्रकृत्यादिनित्यस्वरूपभूतोऽनादिनित्य एवेति नोक्तदोषः। टीकाकारास्तु मन्यन्ते। भेदो नामान्योन्याभावः। स चान्योन्यतादात्म्यापत्त्यैव निवर्तनीयः। प्रतियोग्याप(ग्युत्प)त्तेरेवाभावविपत्तित्वस्य प्रागभावे दृष्टत्वात्। न च कदापि पदार्थानामन्योन्यं तादात्म्यमस्तीत्यनित्यानामपि भेदो नित्य एव"** इत्युक्तम्। अत्र स्वयं नित्यस्वरूपभूतभेदस्यैव नित्यत्वमुक्त्वाऽनित्यस्वरूपभूतभेदस्यापि नित्यत्वं कथयतां प्राचीनटीकाकाराणां पद्मनाभतीर्थानां मतं गौरवेणानूदितमेव न निराकृतम्।

ननु तथापि परस्परं विरोधो भवत्येवेति चेत्। न। "अनित्यानां हि न सर्वथाऽस्मन्मते नाशः। किन्तु कार्याकारेणैव। कारणात्मना त्ववस्थानमेव तेषाम्। अतोऽनित्यस्वरूपभूतभेदोऽपि कारणात्मनाऽवतिष्ठत इति टीकाकाराणामभिप्रायः। इममेवाभिप्रायं सूचयितुं सुधायां प्रकृतिरूपमूलकारणस्वरूपभेदस्य नित्यतोक्ता। सुधायामनित्यप्रपञ्चस्वरूपभेदस्यानित्यताङ्गीकारस्तूपादानरूपेण सतो घटस्येव तद्रूपेण सतो भेदस्यापि व्यवहारानुपयोगित्वमभिप्रेत्यैवातो न कोऽपि विरोध इति मन्तव्यम्" इति यादवार्यैरेव स्फुटं विरोधस्य परिहारात्।

एवं **"देहात्मनोरपि एकदेशस्थत्वादिसादृश्यमस्त्येव"** इति विष्णुतत्त्वनिर्णयटीकायां प्राचीनटीकाकारा अभ्युपेत्यवादेन व्याचख्युरिति समर्थयमाना एव तेषां व्याख्यानमन्ववादिषुः। न निराकार्षुः।

तथाहि– "नन्वहं मनुष्य इति देहात्मविभ्रमस्तावदस्ति। अन्यथा संसाराभावप्रसङ्गात्। देहात्मभ्रमाद्धि रागद्वेषोदयः। ततः पापपुण्यरूपप्रवृत्युत्पादः। तस्मादपूर्वदेहादिलाभः। तेन दुःखप्राप्तिः। तथा चोक्तम्– "नैषां ममाहमिति धीः श्वसृगालभक्ष्ये" इति। तत्र यद्यप्यधिष्ठानं प्रधानञ्चास्ति। तथापि सादृश्याभावादुक्तव्याप्तिभङ्ग इति चेत्, किमत्राऽत्मनि देहारोपो देहे वाऽत्मारोप उत भिन्नयोर्देहात्मनोरभेदारोपः। न प्रथमद्वितीयौ। देहात्मनोः प्रातीतिकत्वप्रसङ्गात्। देहाद्यन्तराभावात्। न तृतीयः। आविपालगोपालं देहात्मभेदज्ञानसद्भावस्यान्यत्रोपपादितत्वात्। कथं तर्हि मनुष्योऽहमित्यादिव्यवहार इति चेदुपचारेणेति ब्रूमः। उपचारे किं निमित्तमित्यत आह– देहात्मनोरिति। यथा वस्तुतो भिन्नयोस्तन्तुपटयोरेकदेशस्थितत्वं भेददर्शनेऽपि स्फुटतरविवेकाभावश्चास्ति तथा देहात्मनोरपीत्यनेन सादृश्येनायं व्यवहारः। ततो भ्रान्तेरभावान्नात्रोक्तव्याप्तेर्भङ्गश्शङ्कनीय इति। स्फुटभेदज्ञानाभावादेव संसारोपपत्तिः। किञ्च स्फुटभेदज्ञानेऽपि पुत्रादाविव स्नेहवशाद्रागादिकं सम्भवत्येव। पुराणवाक्यमपि स्फुटभेदप्रतिभासाभावविषयमिति। **अन्ये तु** देहात्मभ्रममङ्गीकृत्य सादृश्योपपादनार्थमिमं ग्रन्थं व्याचक्षत" इति।

अत्र **अन्ये** इत्यनेन पद्मनाभतीर्थादयो गृहीता इति राघवेन्द्रश्रीचरणाः। नरहरितीर्था गृहीता इति श्रीनिवासतीर्थाः। नारायणपण्डिताचार्या अपीति सुवर्णनिकषकाराः कुम्भकोणानन्दतीर्थाचार्याः। तथाच सर्वेषामपि प्राचीनानां व्याख्यानान्यभ्युपेत्यवादेन प्रवृत्तानि न स्वमतानुसारेणेति न तेषां देहात्मैक्यभ्रमनिषेधपरानुव्याख्यानविरोध[१] इति सश्रद्धं प्रतिपादयन्ति।

---

१ देहात्मत्वं यदि न तत्प्राप्तं प्रत्यक्षतः क्वचित्। मम देह इति ह्येव न देहोऽहमिति प्रमा।... जातमात्रा मृगा... यदा देहान्तरज्ञानं देहैक्यावसितिः कुतः। इतिभक्तिपादीयानुव्याख्यानविरोधः।

ननु प्रकृत्यधिकरणे "टीकाकारास्तु" इति यथा सादरं नामनिर्देशः कृतस्तथाऽत्र कुतो न कृतः। "अन्ये तु" इति कुत उक्तमिति चेत्। श्रुणु। नात्र **अन्ये** इत्यस्य स्वयूथ्येभ्यो भिन्ना इत्यर्थः। किन्तु **"प्रोक्ता अन्येनैव सुज्ञानाय प्रेष्ठ"** इति (का.अ-१ब्रा-५म-९) काठकोपनिषदि वर्तमानस्यान्यशब्दस्य,**"अन्यो भगवानन्योऽहमित्यजानन्ननन्य"** इति पूर्ववाक्यभाष्यानुसारेण **अन्यो भगवान्, अन्योऽहमिति जानन्नन्य** इति यथाऽर्थस्स्वीक्रियते तथाऽत्रापि अन्य इत्यस्य अन्यत्वज्ञानिनो जीवब्रह्मभेदज्ञानिनो [१]देहात्मभेदज्ञानिनश्च सुज्ञानदानसमर्थाः प्राचीनास्स्वयूथ्या एव महानुभावा इत्यर्थः।

[२]अवश्यञ्चैतदेवं विज्ञेयम्। पूर्वं **"प्रपञ्चो यदि विद्येत"** इति श्रुतेः पराभिप्रेतार्थं प्रपञ्चमिथ्यात्वं निराकृत्य **"जीवेश्वरभिदा चैव"** इत्यादिपरमश्रुतिसंवादेन भेदपरत्वं समर्थितम्। ततः, प्रपञ्चस्य भ्रान्तिकल्पितत्वं सदृशस्य सत्यस्य प्रधानस्याभावे नोपपद्यते। न च सत्यं सदृशं प्रधानं त्वयाऽङ्गीक्रियते। अतो भ्रान्तिकल्पितत्वमपि प्रपञ्चस्य नाङ्गीकर्तुं शक्यत इति न प्रपञ्चमिथ्यात्वं श्रुत्यर्थ इत्युक्तम्।

ननु देहात्मैक्यभ्रमस्सादृश्याभावेऽपि भवतीति शङ्कायां, वस्तुतो देहात्मैक्य-भ्रमस्सिद्धान्ते नास्ति। परमतानुसारेण देहात्मैक्यभ्रमाङ्गीकारेऽप्येकदेशस्थत्वादि-सादृश्यस्य सत्त्वादेव भ्रान्तिर्भवति न तु सादृश्याभावेऽपीति प्राचीनटीका-काराणामाशयः।

---

१ अन्यो भगवान्,अन्योऽहमिति जीवात्मपरमात्मान्यत्वज्ञानिनो यथा अन्य इत्युक्ताः, एवमेव देहात्मा-न्यत्वज्ञानिनोऽपि अन्य इति, अत्र विवक्षिता इति भावः। तेन प्राचीनानां व्याख्यानस्याभ्युपगमवादत्वं स्फुटीकृतं भवति।

२ अस्य 'अन्ये इत्यौपनिषदशब्देन कथनमेवौचित्यं भजते हीति'। इत्युत्तरत्रान्वयः।

अभ्युपेत्यवादस्य चेदं प्रयोजनं यत्प्रागुक्तस्य समर्थनम्। तथाच देहात्मैक्य-भ्रमाङ्गीकारेऽपि सादृश्येन विना सोऽपि न भवतीति सर्वत्र भ्रमस्थले सादृश्य-मङ्गीकार्यमेव। प्रकृते च सदृशस्य सत्यस्य प्रपञ्चस्याभावात् भ्रान्त्यनुपपत्तेः प्रपञ्चमिथ्यात्वमनुपपन्नम्। अत एव प्रपञ्चमिथ्यात्वं न श्रुत्यर्थः किन्तु प्रागुक्त-जीवेश्वरभेदादिनित्यत्वमेव श्रुत्यर्थ इति समर्थितं प्राचीनटीकाकारैरभ्युपेत्यवादेन।

तथाचास्मिन् जीवेश्वरभेदनित्यत्वसमर्थनप्रसङ्गे प्राचीनटीकाकाराणां जीवेश्वर-भेदज्ञानिन इत्यर्थे वर्तमानेन **अन्ये** इत्यौपनिषदशब्देन कथनमेवौचित्यं भजते हीति। एवं च सादरमेव निर्देशः कृत इति निश्चिनु।

किञ्चान्याभिप्रायमाश्रित्य कथनेनान्यैः कथितमिवाभवत्। यथा हि लोके सर्वदा युक्तमेव वदन्देवदत्तो यदाऽन्योक्तमयुक्तमनुवदति, तदा वदन्ति नेदं देवदत्तो वदति किन्त्वन्य एव कश्चन वदतीति। देवदत्तकर्तृककथनस्य प्रत्यक्ष-सिद्धत्वेऽपि तस्य स्वाभिप्रायकथनरूपत्वाभावाभिप्रायेण, अन्यो वदतीति यथा प्रयुज्यते तथा प्रकृतेऽपि प्राचीनटीकाकाराभिप्रायाभावविवक्षया अन्याभिप्रायकथन-विवक्षया **अन्ये** इति पदप्रयोगस्साधुः।

एवमन्यत्राप्यविरोधोऽवगन्तव्य इति सर्वमवदातम्॥

**॥ इति श्रीमदुत्तरादिमठाधीशश्रीमत्सत्यात्मतीर्थविरचितः कर्मनिर्णयटीकाभावप्रकाशिकापराभिधः खण्डार्थचन्द्रिकाविमर्शात्मकः कर्मविजयः समाप्तः॥**

★★★

### पुत्तिगेमठाधीशैः आनन्दनिधितीर्थैः लिखितं सर्वमूलतालपत्रम् । {प.सं.15}



### "तत्तन्मुख्याविरोधेन" इति पाठस्यैव बहुत्र उपलम्भे प्रमाणचित्रसङ्ग्रहः {प.सं.72}



“नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् ।
तथापि मत्कृता पूजा तत्प्रसादेन नान्यथा ॥

तद्भक्तिस्तत्फलं मह्यं तत्प्रसादः पुनःपुनः ।
कर्मन्यासो हरावेवं विष्णोस्तृप्तिकरस्सदा ॥

अनेन भावि यत्पुण्यं तदाप्नोतु गुरुर्मम ॥

॥ श्रीकृष्णार्पणमस्तु ॥





गम्भीरापारशास्त्राकूपारपारतरणे तत्पङ्क्तिपर्यालोचने च
निस्सीमाध्ययनसचिवगम्भीरालोचनं, मौलगूढार्थस्य ग्रहणं, युक्त्या विवेचनं,
चिरन्धारणञ्चेति प्रधानम्बीजम् । यच्चाधुना नरमात्रजनानान्दुर्लभमिति तु न
तिरोहितमात्मावमर्शवताम्पुंसाम् । तदिदं परं सर्वं, व्याख्यानैपुण्यपुण्यबीजं
वैराग्यभाग्येषु तपोतिशयमहिमवत्सु टीकाकृत्सु समूढमिव दृढन्निरूढमूलम् ।
अनितरसाधारणी हि **"धारणमातृका"** टीकाकृताम् ।
अन्यूनानतिरिक्तभाषित्वं, युक्तिसहविचारशालित्वं, यथासिद्धान्तं विषयोपपादकत्वं,
चितोचितपदपुञ्जैस्सन्दर्भनिरूपकत्वञ्चेति निखिलापेक्षितनवनवोन्मेषप्रतिभावैभवं
टीकाकृतोऽन्यत्र प्रायो विरळं, न क्वापि सुलभं, किं बहुना नास्त्येवाप्रतनजनेषु ।....

**न लोमाप्यहीयत टीकायाः** । न हीयते । न ह्रास्यते वा ।

श्रीमत्सत्यात्मतीर्थाः
उत्तरादिमठः